आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८०

विश्वेश्वरविरचितटीकासमेता

# श्रीमच्छंकराचार्यकृता वाक्यवृत्तिः ।

वे० शा० रा० वैद्योपाह्वै रंगनाथशास्त्रिभिः संशोधिता ।

सा च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशिता ।

शालिवाहनशकाब्दाः १८३७

खिस्ताब्दाः १९१५



मूल्यमाणकाष्टकम् ( आ० ८ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

अस्या विश्वेश्वरविरचितटीकासमेतश्रीमच्छंकराचार्यकृतवाक्यवृत्तेः पुस्तकं यैः परहितैकपरतया दत्तं तेषां नाम लिख्यते—

पुण्यपत्तननिवासिनां रा० रा० रामचन्द्रगोविन्द केळकर इत्येतेषाम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

विश्वेश्वरविरचितटीकासमेता

श्रीमच्छंकराचार्यकृता

# वाक्यवृत्तिः ।

ब्रह्माहमेतन्मयि भाति विश्वं श्रीमाधवप्राज्ञगुरोः प्रसादात् ।
अन्वर्थविश्वेश्वरपण्डिताख्यस्तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ २ ॥

परमकृपानिधिः श्रीमच्छंकराचार्यभगवत्पादस्तापत्रयार्कसंततानामपरिमितजननादिसंसाराध्वश्रमपरिपीडितानामात्मज्ञानशिशिरमधुरजलाकाङ्क्षिणां विदूरशारीरकमीमांसाजलाशयगमनासमर्थानां वाक्यवृत्तिसंज्ञकोपदेशप्रकरणप्रपापरिकल्पनेनान्तःशीतलतां विगतक्लेशतां [ च ] संपादयंस्तत्राऽऽदौ प्रकरणश्रवणे प्रवृत्तानामधिकारिणामविघ्नेन ब्रह्मप्रतिपत्तितादात्म्यसिद्धये प्रकरणपरिपाट्याऽद्वितीयबोधस्मरणपूर्वकं तन्नमस्कारस्यावश्यकर्तव्यतां द्योतयन्स्वयं नमस्कुरुते—

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं
विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं
श्रीवल्लभं विमलबोधघनं नमामि ॥ १ ॥

विमलबोधघनं नमामीत्यन्वयः । विगतो मलो यस्मादसौ विमलो विमलश्चासौ बोधश्च विमलबोधः स एव घनं मूर्तिः स्वरूपमिति यावत् । परमात्मनोऽविद्यारहिततया तदविद्याकल्पितस्य घटादिदृश्यस्याभावेन तदालम्बनरूपो मलो न विद्यतेऽतो विमलो निर्विषयो निर्विकल्पोऽद्वितीयज्ञानमिति यावत् । नन्वद्वितीयबोधस्य मनसोऽप्यविषयत्वात्कथं नमस्कारविषयतेत्यत आह—विश्वेश्वरमिति । अद्वितीयबोधस्य विश्वस्वा-

मित्वसंपादनाय शरीरस्वीकरणमेव नोपपद्यत इत्यत आह—अचिन्त्यशक्तिमिति । शक्तिशब्देनात्र मायाऽभिधीयते । सा च बोधात्मनो ब्रह्मणो भिन्नाभिन्नत्वादिरूपेण चिन्तितुं नार्हतीत्यचिन्त्या । अचिन्त्यत्वं मायायाः कथमिति चेदुच्यते । इयं तु स्वप्रबोधबाध्यत्वात्स्वप्नसदृशी भवति । युक्तिभिर्हीनप्रकाशत्वादस्या मायेति संज्ञा । इयमसती न भवति दृश्यमानत्वात् । न हि शशविषाणादिकमसद्दृश्यते । सती च न भवति कुतो बाध्यमानत्वात् । न हि सन्नात्मा कदाचिद्बाध्यते । आत्मनो न हि भिन्ना भवत्यधिका न सत्ताव्यतिरेकेण तस्या मायायाः पृथक्सत्ताभावात् । न हि रज्ज्वामारोपितस्य सर्पस्य तद्भिन्नत्वं रज्ज्वाद्यभावे तददर्शनात् । न तदभिन्ना च भवति कुतो जडत्वात् । न हि जडाजडयोरेकरूपत्वं वस्तुनो द्वैरूप्यासंभवात् । तन्नोभयात्मिका विरुद्धत्वात् । नेयं सावयवाऽनादित्वेन स्वकारणावयवाभावात् । न स्वकारणं ब्रह्म सावयवं भवति । नापि निरवयवा स्वकार्येषु सावयवत्वदर्शनात् । न ह्यङ्कुरादिकारणं बीजं निरवयवं भवति । तस्मादविचाररमणीया विलासिनीतुल्याऽसत्यभूतैः स्वकार्यविभ्रमैर्जीवं मोहयतीवातो मायाया अचिन्त्यत्वमिदं तु तस्या मायाया दूषणाय न भवति किं तु भूषणमेव । एवंभूताचिन्त्यशक्तिवशाद्विमलबोधस्य शरीरस्वीकारोऽभ्युपपद्यत इति भावः । अद्वितीयबोधस्याचिन्त्यशक्तिवशाच्छरीरस्वीकरणे किं प्रयोजनमित्याकाङ्क्षायां सार्वभौमस्येव विश्वस्वामित्वेन लीलाप्रयोजनं सूचितमपि लक्ष्मीकान्तत्वेन क्रीडाप्रयोजनं ज्ञापयंस्तस्य विष्णुरूपेणावस्थानमाह—श्रीवल्लभमिति । लोके तस्याः सकलसुन्दरीजनस्य दृष्टान्तभूतसौन्दर्यवत्या इन्दिरायाः प्रसादादेव सुकृतिनां योगिनामाकाशगमनपरकायप्रवेशनबहुरूपस्वीकारादिक्रीडा संभवति । तथाच सति तस्या भर्तृबहुशरीरस्वीकारादिक्रीडा संभवतीत्यत्र किमु वक्तव्यमिति । शरीरस्वीकरणे क्रीडैव प्रयोजनमिति श्रीवल्लभशब्देनावगम्यते । ततो विमलबोधस्य श्रीवल्लभरूपेणावस्थानादपि नमस्कारविषयत्वमुपपद्यत एवेत्यर्थाल्लभ्यते । ननु विश्वसद्भावे विश्वस्वामित्वं क्रीडा च संभवतः । अतो विश्वं कुत उत्पन्नमित्याकाङ्क्षायां विमलबोधादेव विश्वोत्पत्तिरिति वक्तुमचिन्त्यशक्तिवशात्तस्य निमित्तकारणब्रह्मरूपेणावस्थानमाह—विदितविश्वमिति । विदितं विश्वं सर्वं येन स तथोक्तः सर्वविदित्यर्थः । सर्वविदो जगन्निमित्तकारणत्वे

श्रुतिः—" यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपस्तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते " [ मु० १ ख० १ म० ९ ] इति । अनुमानमपि, इदं विश्वं विशिष्टविज्ञानवत्पूर्वकं कुतो विचित्रकार्यत्वाच्चित्रादिवदिति । यदा विमलबोध एवाचिन्त्यशक्तिवशात्स्वयंभूर्भूत्वा विविधाकाराकारितमायासाक्षी भवेत्तदा विश्वमुत्पन्नं स्यादिति वेदितव्यम् । ननूपादानव्यतिरेकेण केवलं निमित्तं कार्योत्पादकं न भवत्यत्र किमुपादानमित्यपेक्षायां विमलबोधस्यैवाचिन्त्यशक्तिवशाद्विश्वोपादानत्वमाह—सर्गस्थितीति । यथा लोके कुड्यादिकार्यस्य मृदाद्युपादानादुत्पत्तिस्तत्रैव स्थितिस्तत्रैव प्रलयश्च दृश्यते । तथा—"जन्माद्यस्य यतः " [ ब्र० सू० १ । १ । २ ] इति सूत्रे " यतो वा इमानि भूतानि जायन्ते " [ तैत्ति० ३ । १ । १ ] इति तद्विषयवाक्ये च ब्रह्मण एव सर्वभूतानामुत्पत्तिस्तत्रैव स्थितिस्तत्रैव लयश्च श्रूयते । अतो विमलबोधस्यैव विश्वोपादानत्वं सिद्धमित्येवमर्थोऽवगम्यते । अत्र यथोर्णनाभिर्जन्तुविशेषस्तन्तूत्पादने स्वयमेव निमित्तमुपादानं च भवति तथा विमलबोधश्चेति कृत्वैकस्यैव निमित्तत्वमुपादानत्वं च नोपपद्यत इति शङ्का न करणीया । यतो विश्वोपादानं विमलबोधस्ततस्तस्य तत्कार्यविश्वरूपेणावस्थानमाह—अनन्तमूर्तिमिति । अनन्ता मूर्तयो देहा यस्य स तथोक्तः, विमलबोधस्य प्राणिरूपेणावस्थाने बन्धनप्रसक्तौ तां परिहरन्नाह—निर्मुक्तबन्धनमिति । " ममैवांशो जीवलोके जीवभूतः सनातनः " [ गी० १५ । ७ ] इति स्मृतेरात्मांशस्य मायामूढस्य जीवस्यैवाविद्यातो बन्धो भवति न तु मायिकस्याद्वितीयस्य विमलबोधस्याविद्यारहितस्य स्वमायया प्राणिरूपेणावस्थितस्य बन्धोऽस्तीत्यर्थः । एवं विमलबोधोऽचिन्त्यशक्तिवशाद्विश्वेश्वराद्यनेकरूपेण क्रीडमानोऽपि निर्मुक्तबन्धनश्चेत्तर्हि तस्यैवानेकरूपावस्थानमेव वरं तत्तत्सुखसमुद्भवान्नतु केवलस्वरूपेणावस्थानमित्याशङ्क्य तत्तत्सुखसद्भावस्य खण्डितत्वान्न तथेत्याह—अपारसुखाम्बुराशिमिति । अम्बुराशिरिवाम्बुराशिः सुखमेवाम्बुराशिः सुखाम्बुराशिरपारश्चासौ सुखाम्बुराशिश्चेति स तथोक्तः । " आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते " [ तैत्ति. ३–६–१ ] इत्यादिश्रुतिभ्यः आत्मन आनन्दरूपत्वावगमाद्विमलबोधस्यापरिमितानन्दरूपेणावस्थानमेव वरं तथाऽप्यनिर्वचनीयमायाशक्तिवशात्स्वेच्छयैवानेकरूपेणावस्थानलक्षणा क्रीडा संभवत्येव ॥ १ ॥

एवं सर्वैर्वेदान्तैर्ज्ञेयत्वेनोपास्यत्वेन च निर्दिष्टं गुरूपदिष्टं सोपाधिकं निरुपाधि च ब्रह्मरूपमभिधाय नमस्कृत्य प्रतिपत्तिसिद्धये स्वगुरुनमस्कारं कुरुते—

यस्य प्रसादादहमेव विष्णु-
र्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदाऽऽत्मरूपं
तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २ ॥

यस्य प्रसादादिति । आचार्यप्रसादादविद्यानिवृत्तौ तदविद्यापरिकल्पितदेहेन्द्रियाद्युपाध्यवच्छेदापगमादुपाधिनिर्मुक्तघटाकाशवत्परिपूर्णतां प्रतिपद्य ज्ञात्वा स्वयमेव विष्णुत्वं विदित्वाऽऽह—अहमेवेति । तर्हि विश्वभ्रमाधिष्ठानत्वं तवास्ति किमस्त्येवेत्याह—मय्येवेति । ननु जीवस्य विष्णुत्वमनुपपन्नं प्रत्यक्षविरोधादतो भावनामात्रं तदित्याशङ्क्य नहि जीवो नाम कश्चित्परमार्थतो ब्रह्मव्यतिरेकेणास्त्यतो ब्रह्मैव स्वस्मिन्परिकल्पितमायया जीवरूपेण विवर्तते । तथाच सति तस्य जीवस्य वेदान्तवाक्यश्रवणादिना ब्रह्मापरोक्षज्ञाने सत्यज्ञाननिवृत्त्या तत्कार्यभूताब्रह्मत्वनिवृत्तौ सत्यां ब्रह्मत्वमुपपन्नं स्यादितीममर्थं मनसि निधायाऽऽह—इत्थं विजानामीति । आत्मस्वरूपमहमित्थमहं ब्रह्मेत्यपरोक्षतया जानामीत्यर्थः । नच ब्रह्मणोऽप्यवाङ्मनसगोचरत्वात्कथं ज्ञानविषयत्वमिति वाच्यं फलव्याप्तित्वेन विषयत्वाभावेऽज्ञाननाशाय वृत्तिव्याप्तेरपेक्षितत्वेनाखण्डाकारान्तःकरणवृत्तिविषयत्वात् । न च जीवस्य ब्रह्मत्वे प्रत्यक्षविरोधः "अज्ञानेनाऽऽवृतं ज्ञानं—प्रकाशयति तत्परम्" [ गी० ५-१५-१६ ] इत्यन्तेन भगवद्गीतायामज्ञानावृताद्वयानन्दादिरूपस्यात एव जीवत्वदुःखित्वादियुक्तस्य ब्रह्मत्वानुपपत्तिः स्यात् । यस्य जीवस्य पुनर्ज्ञानेनाज्ञानं निवृत्तं भवति तस्याद्वयानन्दादिब्रह्मरूपप्रकाशसद्भावेन ब्रह्मत्वोपपत्तिः स्यादिति कर्तृभेदेन ब्रह्मत्वानुपपत्त्युपपत्त्योः प्रतिपादितत्वात् । न ह्येकस्याज्ञानिनो ब्रह्मत्वानुपपत्त्याऽन्यस्यापि तदनुपपत्त्या भवितव्यमिति नियमोऽस्ति ।

तथा चोक्तं वाशिष्ठे—

"अज्ञस्य दुःखौघमयं ज्ञस्याऽऽनन्दमयं जगत् ।
अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषः" ॥ इति ।

अस्यार्थः—यथैकमेव जगदन्धापेक्षया तमोरूपेणावभासते। अनन्धापेक्षया प्रकाशरूपेणावभासते। एवमज्ञस्य दुःखराशिरूपेण जगद्भासते, ज्ञस्य तु तदेव जगत्सच्चिदानन्दमयं प्रकाशत इत्यतोऽज्ञस्य दृष्ट्या ब्रह्मत्वमनुपपन्नमपि तत्त्वदृष्ट्या ब्रह्मत्वमुपपन्नमिति भावः। तद्विज्ञानस्य कादाचित्कत्वशङ्कां परिहरति—सदेति। मायिकदेहपातपर्यन्तं स्वरूपमनुभवामीत्यर्थः। अथ वा देहेन्द्रियादिपरिच्छिन्नत्वाभिमानयुक्तस्य जीवस्यापरिच्छिन्नब्रह्माकारत्वमनुपपन्नं स चाभिमानो ब्रह्मापरोक्षज्ञानदार्ढ्यादेव निवर्तते। तच्च ज्ञानदार्ढ्यं "आवृत्तिरसकृदुपदेशात्" [ब्र० सू० ४। १। १] इत्यधिकरणन्यायेन चिरकालकृतवेदान्तश्रवणमननिदिध्यासनाभ्यासादेव भवत्यतो देहादिपरिच्छिन्नत्वाभिमाननिवर्तकब्रह्मापरोक्षज्ञानदार्ढ्याय सर्वदाऽऽत्मस्वरूपमनुभवामीत्याह—इत्थं विजानामि सदाऽऽत्मरूपमिति। सदा यावदज्ज्ञानदार्ढ्यमित्थमहं ब्रह्मैवेत्यात्मरूपं स्वस्वरूपं विजानाम्यपरोक्षतयाऽनुभवामि। एतेन यस्य कस्यचिदपरोक्षज्ञाने जातेऽप्यपरिच्छिन्नस्य परिच्छिन्नत्वविषयासंभावनाविपरीतभावनानिरासकतया ज्ञानदार्ढ्याय शमादियुक्तः सन्विजातीयप्रत्ययनिराकरणपुरःसरमहं ब्रह्मैवेति सर्वदाऽऽत्मचिन्तनं कुर्यादित्युक्तं भवति। अहमेव विष्णुर्मय्येव सर्वं परिकल्पितमित्यनेनापरोक्षज्ञानसद्भावः सूचितः। इत्थं विजानामि सदाऽऽत्मरूपमित्यनेनासंभावनानिवर्तकापरोक्षज्ञानदार्ढ्यं चास्तीति सूचितमतोऽस्य श्लोकस्यायमर्थः—यस्य गुरोः प्रसादादपरोक्षज्ञानं निःशेषदेहादिपरिच्छिन्नत्वाभिमाननिवर्तकज्ञानदार्ढ्यं च निरन्तरानुभवेन सिद्धं तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यमिति। स्वस्य विष्णुत्वकथनं स्वकीयग्रन्थस्यानायासेन ब्रह्मापरोक्षज्ञानजनकत्वप्रदर्शनार्थं गुरूत्कर्षार्थं च। नच स्तुत्यर्थं देहव्यतिरिक्तात्मनिष्ठस्य देहाभिमानासंभवाद्देहनिबन्धनमूलकस्तुत्याद्यपेक्षानुपपत्तेः॥ २॥

आचार्यवान्पुरुषो वेद [ छा० ६-१४-२ ] इत्यादिश्रुतिभ्य आचार्याच्छिष्यस्य विद्यालाभदर्शनाच्छिष्याचार्यप्रश्नोत्तररूपेणैव तत्त्वं निरूपयितुं प्रथमं तावच्छिष्यस्य लक्षणमाह—

तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति॥ ३॥

तापत्रयेति। तापत्रयशब्देनाऽऽध्यात्मिकाधिभौतिकाधिदैविकस्ताप

उच्यते। आत्मानं देहमधिकृत्य प्रवर्तत इत्यध्यात्मम्। अध्यात्मशब्देन श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागादिकर्मेन्द्रियपञ्चकं प्राणादिवायुपञ्चकं मनआद्यन्तःकरणचतुष्टयं चोच्यते। तत्संबन्धी ताप आध्यात्मिको व्याध्यादिः कामादयश्च। भूतानि पृथिव्यादीन्यधिकृत्य भवतीत्यधिभूतमधिभूतशब्देनेन्द्रियगोचर उच्यते। प्राणिहिंसकाश्चोरव्याघ्रनक्रादयोऽभिप्रेतास्तत्संबन्धी ताप उपप्लव आधिभौतिकः। अधिदैवशब्देन—

> " दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः।
> चन्द्रो विष्णुश्चतुर्वक्त्रः शंभुश्च करणाधिपाः " ॥

इति निर्दिष्टा इन्द्रियाधिदेवता उच्यन्ते। तत्संबन्धी ताप उपप्लव आधिदैविकोऽतिशीतोष्णवातवर्षादिः। अत्युग्रतापहेतुभूतग्रीष्ममध्यंदिनार्कवदसह्यत्वात्तापत्रयमेवार्कस्तेन संतप्तः। उद्विग्नमानस इति। व्याकुलितमना इहामुत्रार्थफलभोगाद्विरक्त इत्यर्थः। ननु विषयजनितसुखस्यैव सर्वैः प्रार्थ्यमानत्वात्कथं तत्त्यागो घटत इतिचेन्न कर्मसाध्यस्य कुटचादेरिवानित्यत्वेन विषयसुखानामपि साधनपारतन्त्र्यक्षयिष्णुत्वदर्शनादल्पसुखापेक्षया बहुतरदुःखसंभवाच्च विषयसुखाभासेभ्यो युक्तिमतां विरक्तिरेव स्यात्। नच भिक्षुभिया पचनकरणाभाववन्मृगभिया शाल्यादिकृष्यनारम्भकरणवन्मत्स्यग्रहे केशकण्टकादिसहितमत्स्यादिकं गृहीत्वा हेयांशत्यागेनोपादेयांशग्रहणवद्विषयसुखस्य दुःखभूयस्त्वेऽपि दुःखांशपरिहारेण च सुखपरिग्रहणमिति वाच्यम्। विषमिश्रितमध्वादिवद्दुःखपरिहारेण सुखग्रहणासंभवात्तत्याग एव युक्तः। तर्ह्यत्र विषयसुखस्यानित्यत्वेन दुःखमिश्रत्वेन च त्याज्यत्वेऽपि " अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति " " अपाम सोमममृता अभूम " [ अथर्व०शि०३ ] इत्यादिश्रुत्या स्वर्गादिभोगस्य नित्यत्वप्रतिपादनात्, यत्कृतकं तदनित्यमितियुक्त्यनुगृहीतदुःखमिश्रितत्वाभावाच्च तत्त्यागः कथमितिचेन्न। " तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते "(छा०८।१।६) इत्याद्युक्त्यनुगृहीतश्रुत्या स्वर्गादिभोगस्यानित्यत्वप्रतिपादनात्क्षयिष्णुत्वानित्यत्वसातिशयत्वादिजनितदुःखस्याप्यनिवार्यत्वात्तत्त्यागोऽपि युक्त एव। नित्यत्वप्रतिपादिकायाः श्रुतेः का गतिरिति चेत् "आभूतसंप्लवस्थानममृतत्वं हि भाष्यते" इत्यापेक्षिक-

नित्यत्वप्रतिपादनपरत्वात्तस्मादुभयविधसुखाद्विराग एव श्रेयान् । शमादिसाधनैर्युक्त इति । शमादिशब्देन शमदमक्षान्त्यार्जवसमचित्तत्वादयोऽभिप्रेताः । शमोऽन्तःकरणोपरमः । दमो बाह्यकरणस्याऽऽत्मज्ञानविरोधिबहिर्व्यापारोपरमः । क्षान्तिः परापराधेऽप्यविक्रिया । आर्जवमृजुभावः कायवाङ्मनसामेकरूपता । समचित्तत्वं प्रियाप्रियप्राप्तिषु हर्षविषादराहित्यम् । सद्गुरुं सम्यग्दर्शनरूपसंपन्नं वेदान्तशास्त्रपरिज्ञानिनं मोक्षकामः सन्वेदान्तमहावाक्यतो विशेषतः स्वरूपजिज्ञासया परिपृच्छति । पृच्छतीति पदं प्रणिपातसेवयोरुपलक्षणम् । तद्विद्धि प्रणिपातेन [गी० ४।३४] इति भगवद्वचनेन गुरुशिष्यलक्षणयोर्दर्शितत्वात् । ननु मोक्षसिद्ध्यर्थमात्मविचाराय गुरुमुपसृत्य प्रष्टुं शिष्यः प्रवर्तत इत्युक्तमिदमनुपपन्नम् । अविप्रतिपन्ने निश्चिते वा न्यायो विचारो न प्रवर्तते किंतु विप्रतिपन्ने संदिग्धे । अत्राऽऽत्मनि विप्रतिपत्तिर्नास्त्येवाहं कर्ताऽहं मोक्ताऽहं गच्छाम्यहं तिष्ठामीति कर्तृत्वभोक्तृत्वाद्याकारेणानवरतमनुभूयमानत्वात् । प्रयोजनाभावादपि न विचारमर्हति । न च तज्ज्ञानात्संसारनिवृत्तिः प्रयोजनमिति वाच्यम् । कर्तृत्वादिरूपात्मज्ञानेन सह संसारावस्थानस्य दृष्टत्वेनोभयोर्विरोधाभावात् । न चानध्यस्तात्मविज्ञानात्तत्राध्यस्तस्य संसारस्य निवृत्तिः स्यादिति वाच्यम् । अध्यास एव दुर्निरूपत्वेन तदसंभवात् । नहि कज्जलमुकुरयोरिव जडाजडयोरत्यन्तविलक्षणयोरात्मानात्मनोः परस्परं तादात्म्यं संभवति । तस्मादध्यासनिरूपणादात्मनि संदेहाभावात्संसारनिवृत्तिरूपप्रयोजनाभावाच्चाऽऽत्मविचाराय गुरूपसदनं न कर्तव्यमिति चेन्न । वस्तुतस्त्वात्मानात्मनोः परस्परतादात्म्याभावेऽत्यन्तविलक्षणयोर्दुर्घटकारिण्यचिन्त्यशक्त्यावृतत्वेन विवेकाभावे सत्यन्यस्मिन्नन्यारोपं कृत्वाऽहं मनुष्यो ब्राह्मणः क्षत्रियो ममायं पुत्रः पशुरित्याद्यनादिमिथ्याव्यवहारः संभवतीदमेव प्रपञ्चस्याध्यस्तत्वम् । [ अध्यस्तत्वं ] नाम यदुतान्यस्मिन्नन्यबुद्धिता । "अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" इति भाष्यकारैरुक्तत्वादध्यासकारणभूतमायाया अनिर्वचनीयत्वेन तत्कार्यभूताहंकाराद्यध्यासस्याप्यनिर्वचनीयत्वं विस्तरभयाद्वादीनामध्यासान्तरचतुष्टयमत्रानूद्य न निरस्तमिति द्रष्टव्यम् । सर्वेषां मतेऽप्यन्यस्यान्यधर्मावभासता न व्यभिचरति । नचान्यत्र सतः सर्पादेरन्यत्राऽऽरोपो दृष्टोऽत्र त्वात्मव्यतिरिक्तस्य सर्वस्यासत्त्वेनान्यत्र सत्त्वाभावात्कथमध्यास इति वाच्यम् । पूर्वदृष्टावभासमात्रस्यैवाध्यारोपोपयोगित्वं न तत्सत्य-

तायाः पूर्वदृष्टस्य सत्त्वाभावापराधेन भ्रमानुदयादर्शनात्स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यध्यासलक्षणं पूर्वदृष्टत्वमात्रस्यैवाध्यासोपयोगित्वेनाङ्गीकारात्तस्मात्पूर्वभ्रमजनितसंस्कारस्योत्तरोत्तरभ्रमजनकत्वं स्यात् । पूर्वभ्रमस्यापि ततः पूर्वभ्रमसंस्कारजनिरित्यन्धपरम्परयाऽनाद्यनिर्वाच्याहंकाराद्यध्यासः संभवत्येव । मायिकस्याध्यासस्य दुर्निरूपत्वमलंकारायैव । किंच "सत्यं ज्ञाननमन्तं ब्रह्म" [तै० २ । १ । २] "आनन्दो ब्रह्म [तै० ३ । ६ । १] "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥" [श्वे० ६ । ११] "निष्कलो निरञ्जनो निर्विकल्पो निराख्यः" "असङ्गो ह्ययं पुरुषः [बृह० ४ । ३ । १५]" इत्यादिश्रुतयः कर्तृत्वभोक्तृत्वविवर्जितमद्वितीयजातिगुणाक्रियाषड्र्मिषड्भावादिदोषानुषङ्गरहितं सत्यज्ञानानन्दस्वरूपं सर्वव्यापिनं सर्वसाक्षिणमात्मानं लक्षयन्त्यतस्तादृग्भूतात्मनः संदिग्धत्वात् । ब्रह्म वेद ब्रह्मैव भवति [मु० ३।२।९] "तरति शोकमात्मवित् ।" [छा० ७।१।३] "भिद्यते हृदयग्रन्थिः" [मु०२।२।८]" इत्याद्यनेकरूपश्रुत्या तदपरोक्षज्ञानाद्विधिना कल्पितस्य मिथ्याभूतस्य संसारस्य निवृत्तिसंभवात्साधनचतुष्टयसंपत्त्यनन्तरं वेदान्तवाक्यतः स्वात्मविचाराय गुरुमुपसृत्य तं परिपृच्छतीत्येतदुपपन्नमेव । संसारिणां विषयलुब्धानां विषयार्जनरक्षणनाशेषु तापत्रयं संभवति । तेन तेन तापेन संतप्तानां तेषां मध्ये कश्चिदेतज्जन्मनि जन्मान्तरे वा काम्यनिषद्धवर्जनपुरःसरमीश्वरार्पणबुद्ध्याऽनुष्ठितनित्यनैमित्तिकप्रायश्चित्तसगुणोपासनादिकर्मभिः प्रक्षालितान्तःकरणो विषयाणां सुखाधिकतरदुःखहेतुत्वदर्शनादनित्यत्वाच्चोद्विग्नमानसो भवति । ततः शमादिसाधनैर्युक्तः सन्बन्धनिवृत्त्यर्थमात्मविचाराय गुरुं पृच्छतीति भावः । तापत्रयोद्वेगशमादीनां पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुहेतुमद्भावो द्रष्टव्यः । तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानस इत्यनेन विरक्तिहेतुप्रतिपादकोऽतःशब्दार्थो निर्णीतः । शमादिसाधनैर्युक्त इत्यनेनाऽऽनन्तर्यार्थस्याथशब्दस्यार्थो निर्णीतः । सद्गुरुं स्वरूपविचाराय परिपृच्छतीत्यनेन ब्रह्मज्ञानाय वेदान्तमहावाक्यार्थविचारकर्तव्यता दर्शि-

त्ताऽतो ब्रह्मजिज्ञासाशब्दार्थो निर्णीतः । एवमनेन श्लोकेन " अथातो ब्रह्मजिज्ञासा "[ ब्र० सू० १ । १ । १ । ] इति प्राथमिकाधिकरणन्यायो निरूपित इति द्रष्टव्यम् ॥ ३ ॥

सद्गुरुं परिपृच्छतीत्युक्तं किं परिपृच्छतीत्याकाङ्क्षायां बन्धनिवृत्तिसाधनं परिपृच्छतीत्याह—

अनायासेन येनास्मान्मुच्येयं भवबन्धनात् ।
तन्मे संक्षिप्य भगवन्केवलं कृपया वद ॥ ४ ॥

अनायासेनेति । न विद्यत आयासो यस्मिंस्तत्तथोक्तं येन मुक्तिसाधनेन । अस्मादितिपदेन भवबन्धनस्य प्रत्यक्षसिद्धं दुःखभूयस्त्वमुच्यते । भवबन्धनाद्भवः संसारः स एव बन्धनमिव बन्धनं तस्मान्मुच्येयं मुक्तः स्यां तन्मुक्तिसाधनं संक्षिप्याविस्तीर्येदमिदमिति वदेत्यर्थः । येन संसारान्मुक्तः स्यां तद्वदेत्युक्तं तत्र वक्तव्यं किं शुद्धात्मनः संसार आहोस्विदहंकारात्मनः । नाऽऽद्यो द्वितीयाभावात् । न द्वितीयो लिङ्गभूताहंकारस्य कुड्यादिवदचेतनत्वेन प्रवृत्त्यसंभवाच्च । तर्हि न कस्यापि संसार इति न वाच्यं प्रत्यक्षापलापासंभवात् । तस्मात्प्रतीयमानः संसारः किंनिष्ठ इति चेदुच्यते । वस्तुतस्त्वहंकारात्मनस्त्वदुक्तरीत्या संसारासंभवेऽपि निर्विकारायस्कान्तसांनिधिवशादचेतनलोहप्रवृत्तिवत्केवलचैतन्यसांनिध्यवशादेव देहेन्द्रियादियुक्ताहंकारस्य चिदाभासानुप्रवेशबलात्प्रवृत्तिरूपः संसारः संभवति। स च साभासाहंकारगतसंसारो मिथ्याज्ञानेनाऽऽत्माहंकारयोर्भेदस्याऽऽवृतत्वेन तदविवेकात्साक्षिचैतन्ये रोप्यते । यावत्स्वरूपसाक्षात्कारादज्ञाननिवृत्त्या तदावरणापायो न स्यात्तावन्मिथ्याभूतोऽपि संसारोऽज्ञानिनां सत्य इव भातः सत्पुत्रभार्यादिषु नष्टेषु पुष्टेष्वहमेव नष्टः पुष्ट इति स्वस्मिन्बाह्यधर्माध्यासद्वारा सुखदुःखशोकमोहादिकं प्रयच्छत्येव । यथा मिथ्याभूतोऽपि रज्ज्वामारोपितः सर्पो धावनपादभञ्जनभयकम्पादिहेतुर्भवत्येवं मिथ्यासंसारस्याप्यनर्थकारित्वात्तन्निवृत्तिसाधनमन्वेषणीयमेवातः संसारस्यैवाभावाद्येन संसारान्मुक्तः स्यां तद्वदेति प्रश्नाऽनुपपन्न इति शङ्का प्रत्युक्ता । एतत्सर्वं देहेन्द्रियादयो भावा इत्यादिश्लोकत्रयेणाऽऽचार्यास्तु तत्प्रव्यक्तीं करिष्यन्ति ।

बोधाभासो बुद्धिगतः कर्ता स्यात्पुण्यपापयोः ।
स एव संसरेत्कर्मवशाल्लोकद्वये सदा ॥

साक्षिणः पुरतो भातो लिङ्गं देहेन संयुतम् ।
चितिच्छायासमावेशा जीवः स्याद्व्यावहारिकः ॥
अस्य जीवत्वमारोपात्साक्षिण्यप्यवभासते ।
अवृत्तौ तु विनष्टायां भेदे भाति प्रयाति तत् ॥
व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् ।
दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥
आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥
सुप्तेऽहमि प्रदृश्यन्ते दुःखदोषप्रवृत्तयः ।
अतस्तस्यैव संसारो न मे संसृतिसाक्षिणः ॥

इत्यादिपूर्वाचार्यैः प्रतिपादितबहुग्रन्थस्तस्मिन्नर्थे प्रमाणमतः कल्पितसंसारनिवृत्त्यर्थं साधनप्रश्न उपपन्न एवेति सिद्धम् । अनेनापि जिज्ञासाक्षेपसमाधानं द्रष्टव्यम् । मुक्तिसाधनस्याप्यनायासविशेषणेन यज्ञदानतपआदि ज्ञानोत्पत्तिसाधनं समस्तं निरस्तं स्यात् । "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " [ ब्र० सू० ३ । ४ । २६ ] इत्यधिकरणन्यायेन यज्ञादीनामन्तःकरणशुद्धिद्वारा विविदिषोत्पादकत्वमन्तरेण साक्षान्मुक्तिहेतुत्वासंभवाज्ज्ञानं त्वज्ञानविरोधित्वेन स्वतो मुक्तिसाधनमिति भावः । भगवच्छब्दप्रयोगेण "वेदान्तकृद्वेदविदेव चाहम् "[भ०गी०१५ । १५] इति वेदान्तार्थवित्पुरुषोऽहमेवेति भगवतोक्तत्वादाचार्यस्य भगवत्त्वं तात्त्विकमेवेति विदित्वाऽऽचार्यमुद्दिश्य हे भगवन्हे स्वामिन्हे महादेवेति परमेश्वरवाचकानि वचनानि शिष्येण वक्तव्यानीति ज्ञापयति । केवलं कृपया वदेत्यस्य गुरोः स्वरूपनिष्ठतया निरपेक्षत्वेन दृष्टप्रयोजनापेक्षाभावादुपदेशकारणं कृपैवेति मत्वा शिष्येणाऽऽचार्यकृपोत्पादकानि वचनानि वक्तव्यानीति ज्ञापयति ॥ ४ ॥

तुच्छसुखतत्साधनप्रश्नानपेक्षया संसारतापतप्तानां मुमुक्षूणां सर्वेषां परमानन्दप्राप्तिसाधनस्य पृष्टत्वात्तं प्रश्नमभिनन्दति—

साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते ।
इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥

स्वाध्वीति । विस्पष्टं वदामीत्यनेन स्पष्टत्वादित्थमाचार्यधर्म इत्युक्तम् । " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " [ ब्रह्मसू० ] इति

तृतीयाध्यायचतुर्थपादस्थं षड्विंशं परमार्थं सूत्रम्। तदर्थश्चैवं यथाऽश्वस्य मङ्गलादावयोग्यत्वेऽपि रथादौ विनियोगो योग्यत्वात्तथा ब्रह्मविद्याऽप्ययोग्यत्वात्स्वजन्यफले कर्मानपेक्षाऽपि स्वोत्पत्तौ तदपेक्षैव पापक्षयादिद्वारा तदपेक्षया योग्यत्वात्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन [ बृह० ४। ४। २२ ] इति विविदिषां विद्यां चोद्दिश्य यज्ञाद्याश्रमधर्ममात्रविधानाच्च। कथं विधिरिति चेद्यज्ञादिनिष्ठविविदिषादिसाधनत्वस्यापूर्वत्वाद्विविदिषन्तीत्यस्य लेडन्तत्वाच्च। वेदाध्ययनं वर्णिनो धर्मः। यज्ञदाने गृहस्थस्य। तपो वानप्रस्थस्य। यतिनोऽनाशकं कर्तव्यतयोत्तराविरोधि। यद्वाऽनाशकमित्यत्रानुदरा कन्येतिवदल्पार्थको नञ्। तथाच हितमितमेध्याशनमिति भिक्षुधर्मोऽयमित्येवं पूर्वैः क्षुण्णोऽयं पन्थाः। सावधानमनाः शृण्वित्यनेनैकाग्रचित्तत्वं शिष्यधर्म इति सूचितम्। इदं तदिति। इदमेव मुक्तिसाधनमिति ॥ ५ ॥

तत्किमितिबुभुत्साभिमुखीभूताय शिष्याय तदेवाऽऽह—

> तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः।
> तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥६॥

तत्त्वमस्यादिवाक्योत्थं वाक्यश्रवणजन्यं जीवब्रह्मतादात्म्यविषयमुभयोरपि स एवाऽऽत्मा जीवस्य य आत्मा स्वरूपं स एव परमात्मनः परमात्मनो य आत्मा स्वरूपं स एव जीवस्येति तदात्मा तस्य भावस्तादात्म्यमेकत्वमित्यर्थः। तदेव विषयो यस्य ज्ञानस्य तत्तथोक्तम्। तत्त्वमस्यादिवक्येन जीवब्रह्मतादात्म्ये प्रतिपादिते सति तत्प्रतिपादकवाक्यश्रवणजन्यं जीवब्रह्मतादात्म्यविषयं यज्ज्ञानमस्ति तदिदं मुक्तिसाधनमिति भावः। तदिदमिति तस्यैव वाक्यज्ञानस्यैकत्वकरणजन्यत्वमुक्तम्। तत्त्वमस्यादिवाक्यस्यैव व्याख्यातत्वादस्य ग्रन्थस्य तयोरेकार्थत्वोपपत्तेः पूर्वमुक्तं भवबन्धनादित्यनेन बन्धनिवृत्तिकामोऽधिकारी सूचितः। इदानीं प्रकरणस्य जीवपरमात्मतादात्म्यविषयः। तादात्म्यप्रकरणयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः। मुक्तिः प्रयोजनमिति। अतो विषयप्रयोजनसंबन्धाधिकारिसद्भावात्प्रकरणानारम्भशङ्काऽपास्ता ॥ ६ ॥

एवं शिष्येण पृष्टमायासरहितमुक्तिसाधनं जीवपरमात्मनोस्तादात्म्य-

विषयं ज्ञानमित्युक्तमिदानीं तत्रानुपपत्तिं शिष्यश्चोदयति—

को जीवः कः परश्चाऽऽत्मा तादात्म्यं वा कथं तयोः ।
तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥

जीवं परमात्मानं च न जानाम्यज्ञानतस्तयोस्तादात्म्यं कथं ज्ञायते परस्परविलक्षणयोर्जीवेश्वरयोः कथमैक्यं घटते । तत्त्वमस्यादिवाक्यं वा तदज्ञातपदार्थतादात्म्यं कथं प्रतिपादयेदित्यर्थः ॥ ७ ॥

एतानाक्षेपान्क्रमेण समाधातुमाचार्य आह—

अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि ।
यस्त्वं पृच्छसि कोऽहं मां ब्रह्मैवासि न संशयः ॥ ८ ॥

अत्र त्र्याक्षेपेषु प्राथमिकस्योत्तरत्वेन चैतन्यस्य जीवत्वं मत्वाऽऽह—अन्यो जीवः क इति चेच्चेतनादन्यो जीवो नास्तीत्यर्थः । ननु तथाऽपि चेतनस्य ज्ञेयस्याभावादज्ञातत्वं तथैवावतिष्ठत इत्यत आह—त्वमेवेति । चेतनस्य जीवत्वाभावेऽपि स्वव्यतिरिक्तान्तःकरणादिसाक्षित्वेन स्वस्यैवानुभवसिद्धत्वाज्ज्ञातत्वमस्तीति भावः । हिशब्दो हेत्वर्थे । वाच्ययोस्तादात्म्यं न संभवतीति यतस्ततः कारणाल्लक्ष्ययोस्तादात्म्यं संभवतीति कृत्वा नानुपपत्तिरित्यर्थः । तृतीयाक्षेपसमाधानेन चतुर्थाक्षेपस्यापि समाधानं जातमिति द्रष्टव्यम् । चेतनो जीव इत्युक्तं चेतनस्य जीवत्व उपपत्तिमाह—यस्त्वं पृच्छसीति । अचेतनस्य पृष्टत्वानुपपत्तेर्जीवस्य चेतनत्वमुपपन्नमित्यर्थः । देहेन्द्रियादीनामपि चेतनसांनिध्याच्चेतनवदवभासमानत्वमेव नतु चेतनत्वमपि तु तत्साक्षिणः । "तत्त्वमसि" [छान्दो० ६ । ८ ७] "अहं ब्रह्मास्मि" [बृह० १ । ४ । १०] "अयमात्मा ब्रह्म" [माण्डु० १ । २] इत्यादिश्रुतिभ्यो ब्रह्मत्वाभ्युपगमाच्चेतनत्वं सिद्धमित्येतदर्थं हृदि निधायाऽऽचार्य आह—ब्रह्मैवासीति । प्रथमप्रश्ने जीवपरयोर्लक्षणस्य पृष्टत्वात्समाधानावसरे जीवस्यैव लक्षणमुक्तं न परस्येति न शङ्कनीयं ब्रह्मैवासीत्यनेन देहेन्द्रियादिसाक्षिणश्चेतनस्य जीवस्य ब्रह्मत्वाभिधानात्सर्वसाक्षी चेतनः परमात्मेत्युक्तमेव ॥ ८ ॥

शिष्यो गुरुवाक्यश्रवणानन्तरं पदार्थद्वयं सामान्येन विदित्वा स्फुटं विविदिषुराचार्यमाह—

पदार्थमेव जानामि नाद्यापि भगवन्स्फुटम् ।
अहं ब्रह्मेतिवाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥

अद्यापि भगवत्येवमुक्तवत्यपि स्फुटं पदार्थमेव न जानाम्यतो वाक्यार्थं कथं प्रतिपद्येऽतस्तदर्थं पदार्थं स्फुटं वदेत्यन्वयः । अहं ब्रह्मैवेतिवाक्यार्थं कथं प्रतिपद्येऽतः पदार्थं वदेत्यनेन पदार्थज्ञानादर्वाचीनकाले वाक्यार्थज्ञानस्यासंभवात्पदार्थज्ञानमेव दृढी क्रियतामित्ययमर्थोऽवगम्यते ॥ ९ ॥

" मनुष्याणां सहस्रेषु " [भ०गी० ७।३ ] इति भगवद्वचनान्मुमुक्षोः पुरुषस्य दुर्लभत्वात्प्रश्नानामात्मविषयत्वाच्च पुनः पुनः शिष्यप्रश्नैर्गुरोर्नोद्वेगः स्यात्किं त्वनुमोदनमेवातः शिष्यमात्मावगत्यर्थिनं बोधयितुं प्रथमं तावच्छिष्यस्य प्रश्नमनुमोदते—

सत्यमाह भवानत्र विगानं नैव विद्यते ।
हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह॥१०॥

अत्रास्मिन्नर्थेऽविप्रतिपत्तिमाह । इह तत्त्वमस्यादिवाक्ये पदार्थज्ञानस्य वाक्यार्थावगतिसाधनत्वमन्वयव्यतिरेकसिद्धमित्याह—हेतुः पदार्थेति । यत एवमतो विगानं नैव विद्यत इति योजना ॥ १० ॥

तस्मात्त्वंपदार्थौ निरूपयितुं प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमिति न्यायेन प्रसिद्धं त्वमर्थं तावन्निरूपयति—

अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः ।
आनन्दरूपः सत्यः सन्किं नाऽऽत्मानं प्रपद्यते ॥ ११ ॥

अन्तःकरणेति । अन्तःकरणं बुद्धिस्तद्वृत्तिर्मनः । 'अगमन्मे मनोऽन्यत्र' इति तत्र मनसो धीवृत्तित्वप्रतिपादनादाचार्येण तद्वृत्तिग्रहणेनान्तःकरणस्यैव स्ववृत्तिसाक्षित्वं परिहृतम् । निरालम्बनज्ञानमेव तस्याविद्याकल्पितसाक्ष्यवलम्बनेनैव साक्षित्वं तथा सत्यादावेव निर्विकल्पकज्ञानरूपेणाऽऽत्मनि प्रतिपाद्यमाने न कस्यापि प्रतिपत्तिः स्यादतः स्थूलारुन्धतीदर्शनद्वारा मुख्यारुन्धतीदर्शनवदन्तःकरणसाक्षित्वेनाऽऽत्मानं प्रतिपाद्य तत्प्रतिपत्त्यनन्तरं साक्षित्वेनैव सिद्धमात्मानं निरालम्बनतया दर्शयति—चैतन्यविग्रह इति । अथ वा देहेन्द्रियादिसाक्षीति

---

१ ख. °द्यते ।

वक्तव्ये किमन्तःकरणतद्वृत्तिसाक्षीत्युक्तशङ्कायां बुद्ध्या सहैव देहेन्द्रियसाक्षी प्रत्यगात्मा बुद्धितद्वृत्तिसाक्षी तु स्वयमेवेत्यभिप्रेत्य शुद्धात्मानं दर्शयति—चैतन्यविग्रह इति। चैतन्यं ज्ञानं विग्रहः स्वरूपं यस्य स तथोक्तः स्वयंप्रकाश इत्यर्थः। इदानीं ज्ञानरूपत्वेनाऽऽत्मनो भोगसाधनावयवाभावात्सुखाभावशङ्कायामाह—आनन्दरूप इति। "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादेष ह्येवाऽऽनन्दयाति" [तैत्ति० २।७।२] " सुषुप्तिकाले सकले विलीने तमसाऽऽवृतः। स्वस्वरूपं महानन्दं भुङ्क्ते विश्वविवर्जितः [कैवल्यो० १३] इति। " आनन्दो ब्रह्म " [तैत्ति० ३।६।१] इत्यादिश्रुतिभ्यश्च। सुषुप्तः पुरुषः प्रबोधकं द्वेष्टि। प्रबुद्धश्च सुखमहमस्वाप्समिति कथयति। अतो युक्त्यनुभवाभ्यां चाऽऽत्मन आनन्दरूपत्वं सिद्धमित्यर्थः। तर्हि लोके ज्ञानानन्दयोः क्षणिकत्वदर्शनादात्मनो ज्ञानानन्दरूपत्वे क्षणिकत्वेनानित्यशङ्कायामाह—सत्य इति। अन्तःकरणवृत्तिप्रतिबिम्बितज्ञानानन्दयोरेव क्षणिकत्वं न स्वरूपानन्दज्ञानस्य तस्यावस्थात्रयेऽपि सत्यत्वदर्शनात्। निरवयवत्वेन रूपरसादिरहितत्वात्क्रियाश्रयत्वाभावात्षड्भावविकाररहितत्वाच्च तस्य सत्यत्वं सिद्धमित्यर्थः ॥ ११ ॥

उक्तस्वरूपे निःसंशयज्ञानोपायमुपदिशति—

सत्यानन्दस्वरूपं धीसाक्षिणं ज्ञानविग्रहम्।
चिन्तयाऽऽत्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥१२॥

सत्येति। विज्ञानरूपस्यैवाऽऽत्मनः सत्यत्वमानन्दत्वं साक्षित्वं चेत्येतत्प्रदर्शनार्थं पूर्वोक्तश्लोकोक्तान्येव पदान्यनयाऽपि रीत्या पुनरुच्यन्ते विशेषणविशेष्यरूपेणैव।

यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते।
साक्षित्वमपि बोद्धव्यमविकारितयाऽऽत्मनः " ॥

इति ज्ञानस्यैव त्वंपदार्थत्वं वक्ष्यते। एवंभूतमात्मानमात्मतया चिन्तयाहमिति चिन्तयेत्यर्थः। नित्यं चिरम्। ' नित्यं चिदनुसंधिनः शोको न बाध्यते ' इति वशिष्ठवचनाच्चिन्तनीयमिति भावः। त्यक्त्वा देहादिगां

धियमिति । देहादावात्मबुद्धिं त्यक्त्वेत्यर्थः । धीसाक्षिणमित्यत्र धीशब्देन "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिर्विधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव " [ बृ० १ । ५ । ३ ] इति श्रुतेः कामादि सर्वमपि गृह्यते ॥ १२ ॥

आत्मचिन्तनस्य देहाद्यात्मबुद्धित्यागपूर्वकत्वमुक्तं देहादावात्मबुद्धेश्चिरं निरूढत्वात्तत्त्यागो न घटत इति शिष्यस्याऽऽशयमाशङ्क्य देहादेरनात्मत्वदर्शनेन तदात्मत्वबुद्धित्यागो घटत इति मत्वा तत्त्यागाय देहादेरनात्मत्वं शिष्यस्य दर्शयति—

रूपादिमान्यतः पिण्डस्ततोऽनात्मा घटादिवत् ।
वियदादिमहाभूतविकारित्वाच्च कुम्भवत् ॥ १३ ॥

रूपेति । पिण्डो देहोऽनात्मा रूपरसादिमत्त्वात् । रूपादिमत्त्वं सर्वेषां वस्तूनां प्रत्यक्षसिद्धमिति घटादिदृष्टान्तः । महाभूतविकारत्वं कुम्भस्यैव प्रत्यक्षसिद्धमिति कुम्भदृष्टान्तः ॥ १३ ॥

केवलपिण्डस्यानात्मत्वदर्शनमात्रेणाऽऽत्मचिन्तनं न घटते किं त्वात्मनः स्फुटपरिज्ञानेनापि भवितव्यमिति मत्वाऽऽत्मानं स्फुटं परिज्ञातुं तत्स्वरूपं वदेत्याचार्यमाह—

अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः ।
करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४ ॥

अनात्मेति । अयमितीदंशब्देन पिण्डस्य दृश्यत्वेनाप्यनात्मत्वमुच्यते । अयं देहः पूर्वोक्तहेतुनाऽनात्मेति संमतश्चेद्भवतु नामानात्मत्वं देहस्य नैतावताऽऽत्मचिन्ता सिध्येत् । अतः करस्थामलकस्तु यथा प्रत्यक्षदृष्ट एवं साक्षादव्यवधानेनैवंभूतस्वरूपोऽहमित्यपरोक्षतया ज्ञातुमात्मानं प्रतिपादयेत्यर्थः ॥ १४ ॥

एवमन्तःकरणतद्वृत्तिसाक्षीत्यादिश्लोकोक्तमेवेदानीं स्फुटं प्रतिपिपादयिषुरादौ साक्षित्वेनाऽऽत्मानं प्रतिपादयति—

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।
देहद्रष्टा तथा देहो नाहमित्यवधारय ॥ १५ ॥

घटद्रष्टेति । घटद्रष्टा घटाद्भिन्नः सन्सर्वप्रकारेण यथा घटो न भवति

---

१ ख. पृथिव्यादि° ।

तथा घटद्रष्टृवद्देहद्रष्टाऽपि नाहं देहः किं तु स्वदृश्याद्देहाद्भिन्न इत्यर्थः । अत्रायं प्रयोगः—देहद्रष्टा स्वदृश्यदेहाद्भिन्नो द्रष्टृत्वाद्घटद्रष्टृवदिति । श्रुतिरपि "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" [ बृ० ३ । ८ । ८ ] "अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ" [ बृ० ३ । ८ । ११ ] इति ॥ १५ ॥

एवं घटद्रष्टृवद्देहद्रष्टृत्वेनाऽऽत्मानं दर्शयित्वेदानीमिन्द्रियस्य देहद्रष्टृत्वदर्शनात्तस्यैवाऽऽत्मत्वशङ्कायामिन्द्रियस्य साक्षिण एवेन्द्रियद्वारा देहद्रष्टृत्वं न साक्ष्यस्येन्द्रियस्येत्यभिप्रेत्य देहोक्तानुमानेन क्रमादिन्द्रियद्रष्टृत्वेनाप्यात्मानं दर्शयति—

एवमिन्द्रियदृङ्नाहमिन्द्रियाणीति निश्चिनु ।
मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६ ॥

एवमिति । इन्द्रियदृगहं नेन्द्रियं किंतु स्वदृश्यादिन्द्रियाद्भिन्नः कुतो द्रष्टृत्वाद्देहद्रष्टृवत् । एवं मनआदिषु व्याख्येयम् । स्वस्वार्थग्रहणस्फुटाग्रहणादिरूपधर्माणामान्ध्यमान्द्यपटुत्वादीन्द्रियधर्माणां दृश्यत्वस्यानुभवसिद्धत्वाद्धर्मिणोऽपि दृश्यत्वं सिद्धमिति भावः । तथाऽपि मनस एवेन्द्रियद्रष्टृत्वदर्शनात्तस्यैवाऽऽत्मत्वप्राप्तौ पूर्वाभिप्रायेण मनसो द्रष्टत्वमात्मनो दर्शयति—मन इति । तस्य संकल्पविकल्पसंशयात्मत्वेन दृश्यत्वमनुभवसिद्धमित्यर्थः । एवं चेन्निश्चयात्मकबुद्धेरात्मत्वं स्यादित्याशङ्कयाऽऽह—बुद्धिरिति । यथैक एव पुरुषः क्रियादिभेदेन पाचकादिसंज्ञक एवमन्तःकरणं संशयनिश्चयादिवृत्तिभेदान्मनोबुद्धिसंज्ञकं भवति । अतो बुद्धिसंज्ञकस्यान्तःकरणस्य निश्चयात्मकत्वेन क्षणिकत्वेन च दृश्यत्वं सिद्धमित्यर्थः । अन चेष्टायामित्यस्माद्धातोः प्राणशब्द उत्पन्नः । अतश्चेष्टायाश्चेतनधर्मत्वात्तस्यैव साक्षित्वोपपत्तौ स एवाऽऽत्मा स्यादित्यत आह—तथा प्राण इति । तथा देहेन्द्रियादिवदनात्मोच्छ्वासात्मकस्य दृश्यत्वेनानुभवसिद्धत्वात् । सुषुप्तौ प्राणे सत्यपि विज्ञानस्याभावादचेतनत्वमनुभवसिद्धमित्यर्थः ॥ १६ ॥

ननु देहेन्द्रियादिसंघात एवैकैकस्य साक्षीत्यत आह—

संघातोऽपि तथा नाहमिति दृश्यविलक्षणम् ।
द्रष्टारमनुमानेन निपुणं संप्रधारय ॥ १७ ॥

संघात इति । तथा देहेन्द्रियादिवत्संघातोऽपि साक्षी न भवति ।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः [ भ० गी. १३।१

इति स्मृतेः संघातसाक्षित्वेन क्षेत्रज्ञस्य प्रतिपादितत्वात्संघातस्य दृश्यत्वं सिद्धमित्यर्थः । इत्थमुक्तमर्थं दृढीकुर्वन्सप्रमाणमुपसंहरति— इतीति । अत्रेवमनुमानं देहादिसंघातः स्वव्यतिरिक्तद्रष्टृको भवितुमर्हति कुतो दृश्यत्वात् । यो यो दृश्योऽसावसौ स्वव्यतिरिक्तद्रष्टृको दृष्टः । यथा घटस्तथा चायं संघातो दृश्यस्तस्मात्स्वव्यतिरिक्तद्रष्टृक एवेति । एवं देहेन्द्रियादिसाक्षित्वेनाऽऽत्मा दर्शितः । देहेन्द्रियादीनामपि दृश्यत्वेनानात्मत्वमर्थादुक्तम् ॥ १७ ॥

इदानीं दृश्यत्वेनैवाचेतनत्वे सिद्धे सत्यपि देहेन्द्रियादीनां प्रकारान्तरत्वेनाचेतनत्वं ज्ञापयंस्तद्विलक्षणतया चैतन्यविग्रहत्वेनाऽऽत्मानं प्रतिपादयति—

देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ।
यस्य संनिधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥

देहेति । अत्र मात्रशब्दोऽवधारणे । यस्य चैतन्यस्य संनिधिनैव देहादयो हानोपादानव्यापारक्षमाः समर्थाः स्युः सोऽहमित्यन्वयः । देहेन्द्रियादीनां चैतन्यसांनिध्यादेव हानादिसंसारव्यापार इत्यनेन तेषां शकटादिवदचेतनत्वं दर्शितम् ॥ १८ ॥

नन्वविकृतिचेतनसंनिधिमात्रेण बुद्ध्यादिप्रवृत्त्यनुपपत्तेरचेतनबुध्यादिप्रवृत्त्यनुकूलो विकारो वक्तव्यः । तथा सति "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" [भ० गी० २–२५ ] इति स्मृतिविरोधः स्यादित्याशङ्क्याऽऽह—

अनापन्नविकारः सन्नयस्कान्तवदेव यः ।
बुध्यादींश्चालयत्येव सोऽहमित्यवधारय ॥ १९ ॥

अनापन्नेति । प्रवृत्त्यनुकूलविकारान्तरशून्योऽपि यथाऽयस्कान्तोपलः स्वसंनिधिवशाल्लोहव्यापारहेतुस्तथा प्रत्यगात्माऽपि संनिधिवशाद्व्यापार एव सन्बुध्यादिचलनहेतुरित्यर्थः ॥ १९ ॥

ननु शकटादेरचेतनत्वं चेतनस्य तद्भिन्नत्वं च दृष्टम्। कुतो देहादेरचेतनत्वं चैतन्यस्य तद्भिन्नत्वं च दृष्टमित्याशङ्कयाऽऽह—

अजडात्मवदाभान्ति यत्सांनिध्याज्जडा अपि ।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २० ॥

सुषुप्तिमूर्छामरणावसरे देहादौ चैतन्यस्य व्यभिचारित्वाद्दृश्यत्वेनाचेतनत्वानुमानाच्चाचेतनत्वं दृष्टमेव । तथाऽपि देहादयश्चेतनस्य मिथ्यातादात्म्यापत्त्या चेतनवदाभान्ति । अतस्तयोश्चेतनाचेतनत्वं दृष्टमिति भावः ॥ २० ॥

स्वप्ने देहेन्द्रियादेर्द्रष्टृत्वाभावाच्च दृश्यत्वेनाचेतनत्वं युक्तम्। कुतो मनसोऽचेतनत्वमित्याह—

अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् ।
एवं यो वेद धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥

अगमदिति । एतावन्तं कालं मे मनोऽन्यत्र गङ्गादौ गतं तत्स्मरणं त्यक्तम् । इदानीं स्थिरीकृतम् । संनिहितवस्तु विषयी करोतीति गमनागमनादिधर्मिणो मनसो दृष्टत्वस्यानुभवसिद्धत्वान्मनसोऽचेतनत्वं सिद्धमित्यर्थः ॥ २१ ॥

मनसो धीवृत्तित्वादेव दृश्यत्वे सिद्धे सत्यपि वृत्तिमत्या धियो दृश्यत्वं नोपपद्यत इत्यत आह—

स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा ।
यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२ ॥

स्वप्न इति । बुद्धिः स्वप्नजागरिते वेत्ति सुषुप्तिं तु न वेत्ति तत्र बुद्धेरभावात् । आत्मा तु त्रयं च वेत्ति तथा स्वप्नजागरितयोर्धियां भावं सुषुप्तावभावं च वेत्ति । अतो बुद्धिद्रष्टृसद्भावाद्बुद्धेर्दृश्यत्वं सिद्धमित्यर्थः । धियामिति बहुवचनेन बहुत्वात्तु बुद्धीनां साक्षिकत्वविकारित्वादिदमुच्यते(?) । नचाऽऽत्मनः सुषुप्तावभाव एव तदा स्वसत्तापरिज्ञानाभावादित्याशङ्क्य संकल्पविचिकित्साद्यनेकविकारित्वादनित्याया बुद्धेस्तत्राभावो युक्तस्तत्साक्षिणो निर्विकारत्वेन नित्यत्वादात्मनः सुषु-

प्त्यादावपि सत्त्वं सिद्धमित्यभिप्रेत्याऽऽह—अविक्रियेति । अविक्रियपदे-नैव सुषुप्तावात्मनः सत्त्वप्रतिपादनात्साक्षात्पदं किमर्थमिति नाऽऽशङ्क-नीयम् । एतेनाविक्रियपदेनाऽऽत्मनोऽवस्थात्रये सत्त्वे प्रतिपादितेऽपि सु-षुप्तौ स्वसत्तापरिज्ञानाभावप्रयुक्तासत्त्वमनिराकृतमितिकृत्वा तन्निवारणा-य साक्षात्पदम् । साक्षात्प्रकाशते स्वयमेव प्रकाशत इत्यर्थः । अयमाशयः—सुषुप्तौ धीवृत्तेरभावेऽप्यात्मनः स्वयंप्रकाशकत्वेन वृत्त्यन्तरनिरपेक्षतया तस्य प्रकाशसद्भावात्सुषुप्तौ स्वसत्ताभावः सिद्ध इति । अथवा तत्र धीवृत्तेरभावेऽपि सुखमहमस्वाप्सं न किंचिदवेदिषमित्युत्थितस्य सुषुप्ति-गतसुखादिस्मरणदर्शनादननुभूते स्मरणाभावात् । कैवल्योपनिषदि मं० १३—सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति, इति । वेदान्तसारे "एतावीश्वरप्राज्ञौ चैतन्यदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभि-रानन्दमनुभवतः" इति च । विवरणम्—सुषुप्तावज्ञानं तु स्वसत्ता-कारेण सुखाकारेण साक्षात्कारेण च परिणमत इति च स्वानुभवा-स्तित्वप्रतिपादनात्सुषुप्तावज्ञानं सुखसाक्षात्कारेण परिणताज्ञानवृत्ति-प्रतिबिम्बितचैतन्यविषयत्वेनाऽऽत्मनः स्वसत्तासाक्षात्कारस्य विद्यमान-त्वात्तत्र स्वसत्तापरिज्ञानाभावोऽसिद्ध इति वा साक्षात्कारपदार्थः । अथवा साक्षादित्यस्यायमर्थः । आत्मा त्रयं च वेत्तीत्युक्तमिदमनुपपन्नं जाग्रत्स्व-प्नयोर्बाह्याभ्यन्तरकरणवेद्यत्वादित्याशङ्क्याऽऽह—साक्षादिति । इन्द्रिया-णां जडत्वेन स्वतःप्रकाशकत्वासंभवादात्मैव बाह्येन्द्रियान्तरिन्द्रियसा-पेक्षः सञ्जाग्रदवस्थां वेत्ति । स्वप्नमन्तःकरणवृत्तिद्वारा वेत्ति । सुषुप्तिमन्य-निरपेक्षतया साक्षाद्वेत्ति । तस्मादात्मैवावस्थात्रयेऽपि साक्षीति ॥ २२ ॥

एवं देहादेरचेतनत्वेनानात्मत्वमर्थादुक्तम् । तद्विलक्षणत्वेनार्थाच्चैत-न्यविग्रहमात्मानं प्रतिपद्य देहादेर्विलक्षणत्वेन सिद्धं चेतनत्वं सदृष्टान्त-मुदाहरति—

> घटावभासको दीपो घटादन्यो यथेष्यते ।
> देहावभासको देही तथाऽहं बोधविग्रहः ॥ २३ ॥

घटेति । अयमाशयः—यथादीपः स्वप्रकाशरूपत्वात्स्वावभास्याद्घटाद्वि-लक्षणत्वेन प्रकाशरूपो भवति एवं स्वावभास्यादचेतनाद्देहाद्विलक्षणत्वे-नाऽऽत्मा बोधविग्रहश्चैतन्यस्वरूप इति यावत् । एतेनानुमानद्वयं सूचितम् । विमतो देही स्वावभास्याद्देहाद्विलक्षणस्तदवभासकत्वाद्दीपवत् । आत्मा

चैतन्यविग्रहो देहादिविलक्षणत्वाद्घटद्रष्टृवदिति । आत्मनश्चैतन्यवि-ग्रहत्वे श्रुतिरप्यस्ति । " सत्यं ज्ञानमनन्तं ब्रह्म " [ तैत्ति० २ । १ । १ ] " विज्ञानमानन्दं ब्रह्म " [ बृह० ३ । ९ । २८ ]

" एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च "
[ श्वेता० ६ । ११ ]

इत्याद्याः श्रुतयः । एतेन देहादेरचेतनत्वं चेतनस्य तद्भिन्नत्वं च कुतो दृष्टमित्येतदपि निरस्तम् । आत्मनो देहादिविलक्षणत्वप्रतिपादनात् ॥ २३ ॥

इदानीं क्रमप्राप्तानन्दरूपत्वेनाऽऽत्मा प्रतिपाद्यते—

पुत्रमित्रादयो भावा यस्य शेषतया प्रियाः ।
द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय ॥ २४ ॥

पुत्रेति । "आत्मनस्तु कामाय सर्वं प्रियं भवति" [ बृह० २।४।५ ] इतिश्रुतिन्यायेन पुत्रवित्तादयो भावाः पदार्था यस्य द्रष्टुः शेषतया संबन्धितयाऽनुकूलत्वेन प्रियाः स द्रष्टा सर्वप्रियतमः । सर्वेभ्यः पुत्रादिभ्य उत्कृष्टप्रेमास्पदः । अत आत्मनो निरुपाधिकतयाऽऽनन्दस्वरूपत्वमनुभवसिद्धमित्यर्थः । द्रष्टा सर्वप्रियतम इति द्रष्टुः परप्रेमास्पदत्वेनाऽऽनन्दरूपत्वमुक्तम् ॥ २४ ॥

इदानीं तस्यैव कालत्रयेऽपि परप्रेमास्पदत्वेनैव हेतुनाऽऽत्मनः क्रमप्राप्तं सत्यत्वं दर्शयति—

परप्रेमास्पदतया मा न भूवमहं सदा ।
भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥

परेति । अहं भूतकाले मा भूवमिति न किंत्ववश्यमभूवम् । कथं मम भूतेऽवस्थानं नास्त्यनादित्वादात्मनस्तत्राप्यवस्थानमस्तीत्यर्थः । न केवलं भूतकाल एव परप्रेमास्पदत्वं किंतु सदा भूयासमिति । सदेति कालत्रये विवक्षितमपि भूतकालावस्थानस्य प्रतिपादितत्वात्सदेत्यनेन वर्तमानभविष्यत्कालयोर्ग्रहणम् । वर्तमानभविष्यत्कालयोरहं स्यां कालद्वयेऽपि ममावस्थानेन भवितव्यमित्यर्थः । देहादेरनित्यत्वेन सर्वदावस्थानाभावेऽप्यात्मनो नित्यत्वेन कदाचिदपि नाशासंभवादाद्यन्तशून्यस्य मम सर्वदावस्थानं भवतीत्यर्थः । एवं कालत्रयेऽपि परप्रेमास्पदतया

प्रसिद्धो यो द्रष्टा सोऽहमित्यवधारयेत्यर्थः । असतः प्रपञ्चस्य परप्रेमास्पदत्वाभावात्तस्य कादाचित्कप्रतिभानमन्तरेण कालत्रयेऽप्यवस्थानासंभवादात्मनः परप्रेमास्पदत्वात्कालत्रयेऽप्यवस्थानसंभवात्सत्यत्वं सिद्धमित्यर्थः । आत्मसत्तानुप्रवेशेन तत्कल्पितानां सर्वेषां सत्ताप्रतीतिश्च भवति न स्वत इत्यभिप्रायः । मा न भूवमित्यत्र माङ्योगादडागमप्रतिषेधः ॥ २५ ॥

एवमन्तःकरणतद्वृत्तिसाक्षीतिश्लोकोक्तमेवैतदन्तैः श्लोकैः क्रमात्साक्षित्वेन चैतन्यविग्रहत्वेनाऽऽनन्दत्वेन सत्यत्वेन च करामलकवत्स्फुटं प्रतिपाद्येदानीं फलितार्थस्य साक्षिणो बोधस्य तत्त्वमस्यादिवाक्ये त्वमर्थमाह—

य: साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते ।
साक्षित्वमपि बोद्धृत्वमविकारितयाऽऽत्मनः ॥ २६ ॥

य इति । साक्षितया लक्ष्यत इति साक्षिलक्षणः । उच्यत इति । तत्त्वमस्यादिवाक्य इति शेषः । नन्वविकारिण आत्मनः साक्षित्वाभावाद्विकारं प्राप्तस्यैव तस्य साक्षित्वमित्याशङ्क्याऽऽह—साक्षित्वमपीति । स्वाध्यस्तं सर्वं साक्षादन्यानपेक्षयेक्षते प्रकाशयतीति साक्षी । अधिष्ठानभूतस्याऽऽत्मनः स्वयंप्रकाशत्वेन तत्र कल्पितानां तत्प्रकाशेनैव प्रकाशः सिद्धः । तदर्थमीक्षणक्रियाश्रयत्वप्रयासाभावाद्दीपवन्निर्विकारित्वेनैवाऽऽत्मनः साक्षित्वं ज्ञानरूपत्वाद्बोद्धृत्वं च घटत इत्यर्थः ॥ २६ ॥

उक्तमर्थमुपसंहरति—

देहेन्द्रियमनःप्राणाहंकृतिभ्यो विलक्षणः ।
प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः ॥ २७ ॥

देहेति । त्वंपदेनाभिधीयत इति त्वंपदाभिधो यः साक्षिलक्षणो बोधः सोऽनृतजडदुःखात्मकेभ्यो देहेन्द्रियादिभ्यो विलक्षणो विसदृशोऽत एव प्रोज्झिताशेषषड्भावविकारः परित्यक्तो जायतेऽस्तीत्यादिषड्भावविकारः । अन्तःकरणद्वयविवक्षायां बुद्धिरेवाहंकारो मन एव चित्तम् । अतोऽत्राहंकृतिशब्देन बुद्धिरुच्यते । मनःशब्देन चित्तमुच्यते ॥ २७ ॥

यद्यपि सत्यानन्दस्वप्रकाशत्वंपदार्थप्रतिपत्त्यैव पुरुषार्थसिद्धिस्तथाऽप्युभयपदार्थज्ञानस्य परमपुरुषार्थसाधनवाक्यार्थावगतिहेतुत्वात्क्रमप्राप्तं तत्पदार्थं प्रतिपादयति—

त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८ ॥

त्वमिति । एवं निश्चित्येत्यन्तःकरणतद्वृत्तीत्यादिपूर्वोक्तत्वंपदार्थप्रतिपादकवाक्यश्रवणमननाभ्यासवशात्त्वमर्थं निःसंशयं ज्ञात्वेत्यर्थः । तदर्थं चिन्तयेदित्युक्त्वा पुनश्चिन्तयेदित्यत्रापि निःसंशयज्ञानपर्यन्तं पुनः पुनस्तत्पदार्थप्रतिपादकवाक्यश्रवणमननाभ्यासं कुर्यादित्युक्तं भवति । ननु "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" [ तैत्ति० २ । ४ । १ ] इति श्रुत्या वाङ्मनसयोरप्यविषयत्वश्रवणात्कथं चिन्तयेदित्यत आह—अतद्व्यावृत्तीति । तन्न भवतीत्यतदततो व्यावृत्तिरतद्व्यावृत्तिस्तद्रूपेण । अयमाशयः—इदं ब्रह्मेति शृङ्गग्राहिकया विषयीकृत्य चिन्तितुमशक्यत्वेऽपि "अथात आदेशो नेति नेति" [ बृह० २ । ३ । ६ ] इति श्रुत्या ब्रह्मणः कार्यकारणत्वादेः प्रतिषिद्धत्वात्कार्यकारणोपाधिप्रयुक्तं जीवत्वमीश्वरत्वं सर्वज्ञत्वादिकं पारमार्थिकं न भवति किंतु मायिकमेवेति विदित्वा कार्यत्वकारणत्वादीर्घह्रस्वादिपरित्यागेन निषेधावधिभूतं स्वरूपं चिन्तयेदिति । केवलमतद्व्यावृत्त्या स्वरूपपरिज्ञानासंभवात्तदर्थचिन्ता न घटत इत्यत आह—साक्षाद्विधिमुखेनेति । "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] इत्यादिब्रह्मस्वरूपप्रतिपादकवाक्येनेत्यर्थः । अयमभिप्रायः—"सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] "आनन्दो ब्रह्म [ तैत्ति० ३ । ६ । १ ]" इत्युक्ते ज्ञानानन्दादीनां गुणत्वेन साक्षिकत्वेन प्रसिद्धत्वाद्ब्रह्मण एकरूपत्वात्कथं तेषां बहूनां गुणानां निर्गुणस्वरूपब्रह्मत्वमित्यनुपपत्तौ सत्यां लोके वृत्तिज्ञानानन्दादीनां गुणत्वेन क्षणिकत्वेन च ब्रह्मत्वानुपपत्तावपि निर्विकल्पकज्ञानैकस्वरूपब्रह्मणोऽनृतजडदुःखात्मकशङ्काव्यावर्तकत्वेन सत्यत्वानन्दत्वयोरपि ब्रह्मस्वरूपेणैकीभूतत्वात्सत्यज्ञानानन्दस्वरूपं वस्तु ब्रह्मेति जहदजहल्लक्षणया वाऽनृतजडदुःखत्वादिविलक्षणं ब्रह्मेति वा । सत्यादिपदवाच्यत्वाभावेऽपि लक्ष्यत्वोपपत्तेः "सत्यं ज्ञानमनन्तं ब्रह्म" [ तै० २ । १ । १ ] इत्यादि ब्रह्मस्वरूपलक्षणवाक्यैर्विधिमुखेनेतरविषयत्वमन्तरेणापि तदर्थं चिन्तयेदिति ॥ २८ ॥

एवं तदर्थचिन्तायामुपायद्वयमुक्त्वेदानीमतद्व्यावृत्त्या चिन्तनार्थमततो व्यावर्तयंस्तदर्थं निरूपयति—

निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः ।
अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥

निरस्तेति । अविद्यमानभूततमोमल इति यावत् । तम इव तमोऽज्ञानं प्रकाशविरोधित्वात्तदपनोद्यत्वाच्च गुणतस्तमस्त्वमज्ञानस्य तदेव मल आदर्शादिगतमलवदाश्रयमलिनीकरणात्तद्वर्षणापनोद्यत्वाच्च गुणतो मलः पराकृतस्तमोमलो यस्मिन्स तथोक्तः। अत एव निरस्ताशेषसंसारदोषः । संसारः प्रवृत्तिः । दोषशब्देन रागादय उच्यन्ते 'दोषा रागादयः स्मृताः' इति वचनान्निरस्तोऽशेषः संसारो दोषश्च यस्मिन्स तथोक्तः । एतेन जीवाश्रयमिथ्याज्ञानतत्कार्यदोषप्रवृत्तिजन्मदुःखानि च ब्रह्मणो न सन्तीत्युक्तम् । किंचैतेन जीवस्यापि तदेकत्वज्ञानान्मिथ्याज्ञानापाये "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति गौतमवचनाद्रागाद्यपायस्तस्मिन्सति प्रवृत्त्यपायस्तस्मिन्सति जन्मापायस्तस्मिन्सति दुःखापायः स्यादित्यर्थात्सूचितं भवति । इदानीं प्रपञ्चान्तर्गतसर्ववस्तुवैलक्षण्येन निरूपयति— अस्थूलादिलक्षण इति । स्थूलसूक्ष्मत्वलक्षणह्रस्वत्वदीर्घत्वादिलक्षणानि लोके सर्ववस्तून्ययं तु न तथा "अस्थूलमनण्वह्रस्वमदीर्घम्" [ बृह० ३ । ८ । ८ ] इत्यादिश्रुतेः । पुनस्तमेव प्रपञ्चवैलक्षण्येन निरूपयति— अदृश्यत्वादिगुणक इति । दृश्यत्वपरिच्छिन्नत्वादिगुणकः कार्यप्रपञ्चोऽयं तु तद्रहित इत्यर्थः । "अदृष्टं द्रष्टृ" [ बृह० ३ । ८ । ११ ] इत्यादिश्रुतेः ॥ २९ ॥

एवमततो व्यावृत्त्या तदर्थं निरूप्येदानीं विधिमुखेन चिन्तनाय श्रुतिनिर्दिष्टं विधिस्वरूपं निरूपयति—

निरस्तातिशयानन्दः सत्यः प्रज्ञानविग्रहः ।
सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते ॥ ३० ॥

निरस्तेति । निरस्ता मनुष्याद्युत्तरोत्तरशतगुणातिशया आनन्दा यस्मिन्स तथोक्तोऽपरिमितानन्द इत्यर्थः । लोक आनन्दस्यानित्यत्वदर्शनादात्मन आनन्दरूपत्वेनानित्यत्वशङ्कायामन्तःकरणवृत्त्यभिव्यक्तानन्दस्यैवानित्यत्वं न स्वरूपानन्दस्येत्याह—सत्य इति । नन्वानन्दस्य वेद्यत्वात्कथं सत्यतेत्यत आह—प्रज्ञानविग्रह इति । स्वरूपानन्दस्य ज्ञानरूपत्वाज्ज्ञेयत्वानुपपत्तेः सत्यत्वं सिद्धमित्यर्थः । लोके ज्ञानस्यानित्यत्वद-

र्शनादात्मनो ज्ञानरूपत्वेऽनित्यत्वं स्यादित्याशङ्कायामाह—सत्तास्वलक्षण इति । सत्तास्वलक्षणः सन्मात्रस्वरूपः । आत्मसत्ताया अपि घटादिवस्तुसत्तावत्परिच्छिन्नतेत्यत आह—पूर्ण इति । घटादीनां स्वतः सत्तैव नास्ति किंत्वात्मसत्तासमवायात्सत्त्वमतः सर्वाधिष्ठानभूतायाः सत्ताया अपरिच्छिन्नत्वान्न तस्मिन्मायाकल्पितघटादिसमतेत्यर्थः । ननु सत्यानन्दस्वरूपिणं धीसाक्षिणं ज्ञानविग्रहमित्यत्र सत्यानन्दस्वरूपस्य प्रतिपादितत्वात्किमर्थं निरस्तातिशयानन्दः सत्यः प्रज्ञानविग्रह इत्यनेनापि पुनः पुनः प्रतिपाद्यत इति न पौनरुक्त्यं शङ्कनीयं ममोभयत्र कथनस्य प्रयोजनत्वात् । जीवपरयोरैक्यं तूभयोरेकरूपत्वे संभवत्यतस्तयोरेकरूपप्रतिपत्त्यर्थं पूर्वं त्वंपदलक्ष्यत्वेन प्रतिपादितमिदानीं तत्पदलक्ष्यत्वेनेति न दोषः ॥ ३० ॥

एवं क्रमाच्छ्लोकद्वयेनातद्व्यावृत्त्या विधिमुखत्वेन च चिन्त्यत्वेन निरुपाधिकं ब्रह्म निरूप्य तन्निःसंशयज्ञानाय मायोपाधिकमेव षड्भिः श्लोकैर्दर्शयति । तत्रोपादानात्सर्वज्ञस्य विचित्रकार्यजगन्निमित्तकारणत्वानुपपत्तेः सर्वज्ञत्वादिलक्षणकथनेन तस्यैव जगन्निमित्तकारणत्वमर्थाज्ज्ञापयति—

सर्वज्ञत्वं परेशत्वं तथा संपूर्णशक्तिता ।
वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१ ॥

सर्वज्ञत्वमिति । "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" [मु० १ । १ । ९] इत्यादिभिः "पराऽस्य शक्तिर्विविधैव श्रूयते" [श्वेता० ६ । ८] इत्यादिभिर्वेदैश्च यस्य सर्वज्ञत्वं परेशत्वं पूर्णशक्तित्वं च समर्थ्यते तद्ब्रह्मेत्यवधारयेत्यन्वयः ॥ ३१ ॥

ब्रह्मणो निमित्तकारणत्व उपादानकारणं किमित्यपेक्षायां सर्वकार्यानुगतस्यैवोपादानत्वमिति दर्शयितुमात्मविज्ञानात्सर्वविज्ञानप्रतिपादनेनाऽऽत्मनः सर्वकार्यानुगममर्थादाह—

यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ।
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ॥ ३२ ॥

यदिति। "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति" [ छा० ६। १। ३ ] इत्येकविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते "कथं नु भगवः स आदेशो भवति" [ छा० ६। १। ३ ] इत्याक्षेपमवतार्य "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" [ छा० ६।१।४] "मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" ( बृह० ४। ५। ६ ) इत्यादिश्रुतौ। यद्विज्ञानात्सर्वविज्ञानं मृदाद्यनेकदृष्टान्तैः प्रतिपादितं तद्ब्रह्मेत्यवधारयेत्यन्वयः। अयमभिप्रायः—श्रुत्युक्तमात्मज्ञानात्सर्वविज्ञानमात्मनः सर्वानुस्यूतत्वभावेन संभवति। अतः सर्वविज्ञानान्यथानुपपत्त्याऽऽत्मनः सर्वानुस्यूतत्वं सिद्धम्। तच्चानुस्यूतत्वमुपादानत्वमन्तरेण न संभवतीत्युपादानत्वं ब्रह्मण आक्षिपतीति। तथा सत्येवं प्रयोगो विमतं कार्यं स्वानुगतोपादानजन्यं भवितुमर्हति कुतः कार्यत्वाद्घटवदित्यनुमानेन प्रपञ्चस्य ब्रह्मोपादानत्वमुक्तं भवति। "यतो वा इमानि भूतानि जायन्ते" ( तैत्ति० ३। १। १ ) इत्यादिश्रुतिरपि प्रपञ्चस्य ब्रह्मोपादानत्वे प्रमाणम्॥ ३२॥

एवं प्रपञ्चब्रह्मणोः श्रुत्या कार्यकारणभाव उक्तः। किमर्थं तदुक्तमित्याकाङ्क्षायां तावत्प्रपञ्चस्य ब्रह्मकार्यत्वोक्तौ प्रयोजनमाह—

यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ।
तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय॥ ३३॥

यदिति। परमार्थतो देशकालाद्यभावे विकल्पितदेशकालवस्तुपरिच्छेदान्न ब्रह्मण आनन्त्यम्। ब्रह्मण आनन्त्यं नाम सर्वत्र सर्वदा सर्ववस्तुष्वधिष्ठानरूपेणानुस्यूतत्वमथवा ब्रह्मण आनन्त्यं नाम सजातीयविजातीयस्वगतनानात्वशून्यत्वम्। इदं जगत्प्रतीतिकालेऽपि विमुक्ताविव संभवति। जगतां मायामयत्वेन परमार्थतः कदाचिदप्यभावात्। एकमेवाद्वितीयमित्यानन्त्यं प्रतिज्ञाय तस्याद्वितीयत्वसिद्धये प्रपञ्चस्य ब्रह्मकार्यत्वं श्रुतिर्जगौ तद्गानं कृतवती। प्रपञ्चस्य ब्रह्मकार्यत्वे श्रुतिसिद्धे सत्युपादानकारणकार्ययोर्भेदाभावाद्ब्रह्मण आनन्त्यं सिद्धमित्यर्थः। एतेन प्रपञ्चस्य ब्रह्मकार्यत्वकथनं ब्रह्मण आनन्त्यसिद्ध्यर्थमितिप्रयोजनमुक्तं नतु ब्रह्मज्ञानात्प्रपञ्चे नष्टे सति स्वयमेव ब्रह्मण आनन्त्यं सिद्धं भवति। तथाच सति प्रपञ्चस्य ब्रह्मकार्यत्वोक्त्या किं क्रियत इति न

शङ्कनीयम् । यद्यस्य प्रपञ्चस्य ब्रह्मणि कल्पितत्वेन रज्जुसर्पवदधिष्ठानज्ञानापनोद्यत्वात्प्रपञ्चाभावे ब्रह्मण आनन्त्यं सिद्धमेव तथाऽपि प्रपञ्चाधिष्ठानब्रह्मविचारासमर्थान्मुमुक्षून्भेददृष्टीनुद्दिश्य भेदसूचके प्रपञ्चे प्रत्यक्षसिद्धे सत्यपि ब्रह्मण आनन्त्यं सिद्धं भवति । श्रुत्या तयोः कार्यकारणभावस्य प्रतिपादितत्वात् । कार्यस्य कारणानित्यत्वादिति ब्रह्मानन्त्यस्य श्रुतिसिद्धस्य सिद्धत्वज्ञापनार्थत्वात्कार्यकारणत्वोक्तेः । एवं ज्ञापिते प्रपञ्चे सत्यपि ब्रह्मण आनन्त्यसिद्धौ सत्यां ब्रह्मणः सर्वाकारत्वान्मुमुक्षूणां ब्रह्मानन्यत्वेन स्वेषामेव सर्वाकारब्रह्मत्वं ज्ञातं स्यात् । ततस्तेषां प्रपञ्चाधिष्ठानब्रह्मविचारसामर्थ्यं भवेत् । ततो विचारोत्पन्नापरोक्षज्ञानेनाज्ञाततत्त्वार्थभूते देहादिप्रपञ्चे नष्टे सति मुमुक्षूणामपरिच्छिन्नब्रह्माकारत्वसिद्धिः प्रयोजनमित्यर्थाज्ज्ञायते ॥ ३३ ॥

इदानीं प्रपञ्चाधिष्ठानब्रह्मविचारासमर्थान्मुमुक्षूनुद्दिश्य प्रपञ्चोपादानस्य ब्रह्मणो विचार्यत्वं श्रुतिमूलं दर्शयति—

विजिज्ञास्यतया यत्र वेदान्तेषु मुमुक्षुभिः ।
समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४ ॥

विजिज्ञेति । "यतो वा इमानि भूतानि जायन्ते" [ तै० ३ । १ । १ ] इत्यादिवेदान्तवाक्येषु मुमुक्षुभिरतियत्नेन विचार्यत्वेन समर्थ्यते ब्रह्म विचारयितव्यमिति तद्ब्रह्मेत्यवधारयेत्यन्वयः । अथ जगत्कारणं ब्रह्म तद्विचारयितव्यमिति तटस्थलक्षणकथनार्थत्वेनापि कार्यकारणत्वोक्तेः प्रयोजनमुक्तमिति द्रष्टव्यम् ॥ ३४ ॥

यद्यपि कार्यत्वदृश्यत्वादिहेतुना वाऽधिष्ठानज्ञानापनोद्यत्वेन वा प्रपञ्चस्यासत्त्वे सति विजातीयभेदो ब्रह्मणि निरस्तः । तथाऽपि जीवानां प्रपञ्चविलक्षणत्वेन सजातीयत्वे सति तद्भेदनिरासः कथमित्यत आह—

जीवात्मना प्रवेशश्च नियन्तृत्वं च तान्प्रति ।
श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ॥ ३५ ॥

जीवेति । "तत्सृष्ट्वा तदेवानुप्राविशत्," [ तै० २ । ६ । १ ] इत्यादिवेदान्तवाक्येषु ब्रह्मण एव जीवरूपेण कार्यकारणानुप्रवेशः श्रूयते । तत्तदुपाधिभेदात्कल्पितभेदमन्तरेण स्वाभाविकभेदाभावात्स-

जातीयभेदो नास्तीति भावः । आत्मनः स्वाभाविकभेदोऽस्तीति वदन्वादी देवानांप्रियः प्रष्टव्य आत्मभेदः किं दृश्यो वाऽदृश्यो वा । आद्ये किमात्मना दृश्योऽन्येन वाऽन्यस्याचेतनत्वेन द्रष्टृत्वानुपपत्तेरात्मनेति वक्तव्यं तथाच सत्यात्मदृश्यस्य श्वेतपीतत्वादेरात्मधर्मत्वमन्तरेण तद्दृश्यभूतपटादिधर्मवदात्मदृश्यस्य भेदस्याप्यात्मदृश्यभूतदेहादिधर्मत्वं वक्तव्यम् । नादृश्यात्मधर्मत्वमदृश्याश्रयधर्मस्तु द्रष्टृबोधवद्दृश्य एव स्यात् । द्रष्टृबोधस्यापि दृश्यत्वाङ्गीकारे द्रष्टृदृष्टत्वमेव न स्यात् । इदं तु स्मर्तुमपि न शक्यम् । नह्येकस्य द्रष्टृत्वं दृश्यत्वं च संभवति । वस्तुनो द्वैरूप्यासंभवात्तस्मान्नाद्यः । तर्ह्यात्मभेदस्त्वदृश्य इति चेद्ब्रूषे, अस्मत्सखो भवसि । आत्मभेदस्यादृश्यत्वे स एव नास्तीत्युक्तं भवति । ननु परं द्रष्टृभेदो दृश्यते तथाऽपि न प्रतीयत इति चेन्न । तत्सद्भावे प्रमाणाभावादात्मभेद एवासत्यः स्यात् । तस्मान्न द्वितीयः किं चाऽऽत्मभेदः किमात्मनोऽभिन्नो भिन्नो वा । अभिन्नश्चेदात्मव्यतिरेकेण पृथङ्निरूपणासंभवादात्मन एकत्वमेव स्यान्नानेकत्वं भेदस्याऽऽत्मस्वरूपत्वात् । भिन्न इति चेत्तर्हि तद्भिन्नस्तत्त्वरादिवदन्यधर्म एव स्यात् । न तद्द्रष्टृभूतात्मधर्मत्वं तस्मादात्मनि भेदगन्धो नास्त्येव । तथाऽपि निरवयवस्य निर्विकारस्य निर्मूलस्याऽऽकाशस्यैकत्वेऽपि घटमठाद्युपाधिभेदेन यथा घटाकाशो मठाकाश इत्यादिभेदभ्रान्तिः स्यादेवमुपाधिभेदाज्जीव ईश्वर इत्यादिभेदव्यवहारो भवतीत्यलं विस्तरेण । नच तस्याऽऽत्मन एकत्वे दाडिमादिफलवत्स्वान्तर्गतभेदः स्यादिति वाच्यम् । "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [ बृह० ४ । ५ । १३ ] "एकमेवाद्वितीयं ब्रह्म" [ छा० ६ । २ । १ ] "नेह नानाऽस्ति किंचन" [ बृह० ४ । ४ । १९ ] इत्यादिश्रुत्या सैन्धवघनशार्करखण्डादिवदेकरसत्वप्रतिपादनान्निरवयवत्वाच्च स्वगतनानात्वमात्मनो नास्तीत्यर्थः । ननु तर्हि ब्रह्मण एव कार्यकारणानुप्रवेशाज्जीवरूपेणावस्थानेन तादात्म्याद्बद्धत्वं स्यादित्याशङ्क्य कार्यकारणोपाधिसंहतस्यांशवत्प्रतीयमानस्य जीवस्यैवाऽऽविद्यको बन्धो भवति नासंहतस्येश्वरस्य "भीषाऽस्माद्वातः पवते" [ तैत्ति० २ । ८ । १ ] इत्यादिना जीवनियन्तृत्वश्रवणादित्यभिप्रेत्याऽऽह—नियन्तृत्वं चेति । अयमाशयः-यथा शरावादिप्रतिबिम्बितस्य

सूर्यस्य व्योमस्थस्य च भेदाभावेऽपि प्रतिबिम्बगतचलनादिकं बिम्बे नाऽऽयाति एवं बुद्धिस्थचिदाभासरूपजीवगतरागद्वेषसुखदुःखात्मकं बन्धनं बिम्बभूते ब्रह्मणि नाऽऽरोहति। एवं शरावादिषु प्रतिबिम्बितेषु सूर्येषु मध्य एकस्य चलनमन्यस्य यथा न संभवति तद्वज्जीवानामप्येकस्य बन्धनमन्यस्य नाऽऽयातीति। किं च बुद्धिस्थचिदाभासस्य रागद्वेषसुखदुःखात्मकबन्धनं स्वाभाविकं न भवति किंतु तप्तायःपिण्डे दग्धृत्वारोपवद्बुद्धिगतमेव रागद्वेषादिकमविवेकाच्चिदाभासे त्वारोप्यते। तथा सति केवलात्मनो नास्तीत्यत्र किमु वक्तव्यम्। न च नीरूपस्याऽऽत्मनः कथं प्रतिबिम्बमिति वाच्यम्। नीरूपस्याऽऽकाशस्य सनक्षत्रस्य जले प्रतिबिम्बभावदर्शनादिति। अथवा ब्रह्मण एव जीवत्वे स्वस्यैव स्वयं नियन्तृत्वमनुपपन्नमतः को नियन्तेत्याकाङ्क्षायां सर्वज्ञत्वपरमेश्वरत्वादिलक्षणरहितस्य जीवस्य नियन्तृत्वानुपपत्तेर्ब्रह्मण एवोपाधिभेदान्नियन्तृत्वमुपपद्यत इत्याह—नियन्तृत्वं चेति ॥ ३५ ॥

यत एवमतो जीवकृतपुण्यापुण्यमिश्रकर्मणां फलदातृत्वमपि तस्यैवेति श्रुतिषु श्रूयत इत्याह—

कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ ।
जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६ ॥

कर्मणामिति। फलमत उपपत्तेः। [ ब्र० सू० ३ । २ । ३८ ] इत्यस्मिन्नधिकरणे कर्मण एव फलदातृत्वं कर्मणा पूजितस्य परमेश्वरस्य वेति संशयेऽपूर्वावान्तरद्वारा कर्मणः फलदातृत्वमिति पूर्वपक्षं कृत्वाऽचेतनत्वादपूर्वस्य फलदातृत्वानुपपत्तेः कर्मणा पूजितस्य परमेश्वरस्य कालान्तरदेशान्तरदेहान्तरभाविफलदातृत्वोपपत्तेरपूर्वकल्पनं मुधेति राद्धान्तितम्। एवमेतदधिकरणे तद्विषयवाक्ये च

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ [भ० गी० १२।७]
" तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ " [भ०गी०१६।१९]

इत्यादिस्मृतौ चाद्वयस्य परमेश्वरस्य कर्मफलदातृत्वं श्रूयते तद्ब्रह्मेत्यवधारयेत्यर्थः। न केवलं जीवानां कर्मफलदातृत्वं ब्रह्मणः किंतु कारयि-

तृत्वं च तस्यैवेत्याह—जीवानां हेतुकर्तृत्वमिति । हेतुकर्तृत्वं कारयितृत्वं तत्र श्रुतिः—"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष एवासाधु कर्म कारयति तं यमधो निनीषते" [ कौषी० ३।८] इति । उन्निनीषत ऊर्ध्वं नेतुमिच्छति अधो निनीषतेऽधो नेतुमिच्छतीत्यादिश्रुत्या कारयितृत्वं श्रूयते तद्ब्रह्मेत्यवधारयेत्यर्थः । ननूपाधिभेदात्कारयितृत्वे सत्यपि ब्रह्मणः स्वांशजीवविषयोन्निनीषाऽधोनिनीषा च कथमुपपद्यत इत्याशङ्क्य यथा पितुः स्वाज्ञामनुवर्तमाने तामुल्लङ्घ्य वर्तमाने पुत्रे पुत्रत्वे समाने सत्यपि तयोर्व्यवहारतः प्रीतिर्द्वेषश्च संभवति तथाऽत्रापि परमेश्वरस्य स्वाज्ञारूपश्रुतिस्मृत्युक्तमार्गे श्रद्धावति द्वेषवति च जीवे व्यावहारिकी प्रीतिर्द्वेषश्च संभवति । ततस्तत्प्रीतिद्वेषमूला जीवविषयोन्निनीषाऽधोनिनीषा च ब्रह्मण्युपपद्यत इति वेदितव्यम् । एवं मायोपाधिकब्रह्मणः सर्वज्ञत्वपरमेश्वरत्वादिलक्षणकथनेन निर्विकल्पब्रह्मणः परमेश्वरस्यैवौपाधिको भेदो विद्यत इति गम्यते । किंचैतच्छ्रवणलक्षणब्रह्मतादात्म्यज्ञानाज्जीवस्यापि ब्रह्मत्वे सर्वज्ञत्वादिलक्षणं स्यादिति सूचितम् ॥ ३६ ॥

इदानीमुभयपदार्थप्रतिपादकवाक्यबलात्तत्त्वंपदार्थौ चिन्तयित्वा तत्र संशयादिराहित्यमवाप्य ततो वाक्यार्थं चिन्तयेदितीममर्थं ज्ञापयन्नाह—

तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना ।
तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥ ३७ ॥

तत्त्वमिति । संसृष्टविशिष्टतादात्म्यवाक्यार्थेषु मध्ये निश्चितमर्थमाह—तादात्म्यमत्रेति ॥ ३७ ॥

अत्र वाक्ये तादात्म्यमेवेति निश्चितत्वं कुत इत्यत आह—

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥

संसर्ग इति । अत्रास्मिन्वाक्यवृत्तिग्रन्थे तत्त्वमसिवाक्ये च नीलोत्पलमिति वाक्य इव मुख्यार्थस्वीकारेण विशेषणविशेष्यरूपसंसर्गवाक्यार्थोऽन्यतररूपविशिष्टवाक्यार्थो वा न संमत इष्टो भवति तत्र तु नीलगुणस्योत्पलपदार्थोत्पलद्रव्यस्य शुक्लपटादिव्यावर्तकतयाऽन्योन्यविशे-

षणविशेष्यभावसंसर्गार्थस्य वाऽन्यतरस्वरूपविशिष्टार्थस्य वाक्यार्थत्वाङ्गीकारे प्रमाणान्तराविरोधान्मुख्यार्थयोरेव वाक्यार्थत्वं संगच्छत एकवस्तुनिष्ठत्वादुभयोरत्र तु तदर्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य वाऽन्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसंसर्गस्य वा विशिष्टैक्यस्य वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाच्यार्थयोरैक्यं न संगच्छत इति तदुभयं न संमतमित्यर्थः। एतेनैव हेतुनाऽहं ब्रह्मास्मीति प्रतिपत्तिवाक्येऽपि वाच्ययोरहं ब्रह्मास्मीत्यर्थयोरन्योन्यभेदव्यावर्तकतया विशेषणविशेष्यभावसंसर्गवाक्यार्थो न संमतो विरुद्धत्वात्। किंच ब्रह्मणः सर्वगतत्वात्तदंशस्य जीवस्य तदन्तर्भूतत्वादपरोक्षत्वकिंचिज्ज्ञत्वादियुक्तोऽहं परोक्षत्वसर्वज्ञत्वादियुक्तं ब्रह्मास्मीति ब्रह्मान्तःपातित्वेन भावनायां ब्रह्मविशिष्टो जीव इति विशिष्टैक्यब्रह्मस्वरूपत्वमिदमपि "त्वं सर्वत्र स्थितो यस्मादहं पूर्णे त्वयि स्थितः" इतिवदौपचारिकमेव स्यात्। अतो विशिष्टलक्षणवाक्यार्थाङ्गीकारेऽपि तत्त्वंपदार्थयोर्भेद एव प्रतीयते नैकत्वं कथं यथा तटाकस्थमहाजलपातितघटस्थाल्पजलस्य तटाकजलान्तर्भूतत्वेन तद्विशिष्टत्वेऽपि तटाकस्थत्वाद्याकारेण भेद एव प्रतीयते नैकत्वं तद्वदित्यर्थः। संसर्गविशिष्टयोः को भेद इति चेद्यदा नीलमुत्पलमित्युक्त उत्पलद्रव्यं श्वेतपीतादिभ्यो व्यावर्तयन्नीलपदव्यावर्तकत्वाद्विशेषणत्वेन संसृज्यते विशेष्येणोत्पलेन सह तद्वन्नीलगुणमपि वस्त्रादिभ्यो व्यावर्तयदुत्पलपदं विशेष्यं नीलपदेन विशेषणेन सह संसृज्यते तदा विशेषणविशेष्यभावः संसर्गः। यदाऽन्योन्यव्यावृत्तिमनपेक्ष्यैव संसृष्टपदार्थः प्राधान्येन नीलविशिष्टमुत्पलं दण्डविशिष्टो देवदत्त इत्यन्यतरविशिष्टोऽन्यतरार्थस्वीकारस्तदा विशिष्ट इति विशिष्टानुगुण्येन संसृष्टविशिष्टवाक्यार्थयोर्भेदः। तदुभयमत्र विरुद्धत्वान्न संमतमित्युक्तम्। किं च तदर्थस्वीकारे—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" [मुण्ड० २। २। ८] इति।

"स वा अयमात्मा ब्रह्म" [बृह० ४। ४। ५] "ब्रह्म वेद ब्रह्मैव भवति" [मुण्ड० ३। २। ९] "तरति शोकमात्मवित्" [छा० ७।

३ ] इत्यादिश्रुतयो नोपपद्येरन् । तस्माद्द्वौ विदुषां न संमतौ किंतु विरुद्धांशत्यागपुरःसरमविरुद्धवस्तुतादात्म्यरूपवाक्यार्थः संमत इत्याह— अखण्डैकरसत्वेनेति । अखण्डैकरसत्वं नामाहं ब्रह्मास्मि ब्रह्मैवाहमस्मीति व्यतिहारेणाखण्डैकरसवस्तुत्वप्रतिपत्तिः । अत्र श्रुतिः " त्वं वाऽहमस्मि भगवो देवते, अहं वा त्वमसि " इति वाशब्दद्वयमेवकारार्थे । कैवल्योपनिषदि "सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्" [कै० १६] इति श्रुतिः ।

अहं त्वं त्वमहं देव दिष्ट्या भेदोऽस्ति नाऽऽवयोः ।
दिष्ट्या मत्तामसि प्राप्तो दिष्ट्या त्वत्तामहं गतः ॥
तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं शिवात्मने ।
नमो देवादिदेवाय पराय परमात्मने ॥

इति वाशिष्ठे प्रह्लादवचनम् । पदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यभावः प्रत्यगात्मलक्षणयोर्लक्ष्यलक्षणभाव इति संबन्धत्रयेणाखण्डार्थे बोधनीये किमिति विशेषणविशेष्यभावो निषिध्यत इति न शङ्कनीयम् । परम्परयाऽखण्डार्थोपकारत्वेनाङ्गीकारात् । कथं समानाधिकरणविशेषणविशेष्याभ्यामेकत्वे प्रतिपादिते सति तस्मिन्नर्थेऽनुपपत्तिं दृष्ट्वा पश्चाद्विरुद्धांशत्यागेनोभयानुगताविरुद्धचैतन्यमात्रांशस्वीकारेणाखण्डैकरसवाक्यार्थस्वीकारात्संसर्गस्योपकारकत्वम् । नच तर्ह्यहं ब्रह्मास्मि ब्रह्मैवाहमस्मीत्यखण्डार्थेऽङ्गीकृतेऽप्यहंशब्दार्थत्वेन च युष्मत्पक्षेऽपि भेदः प्रतीयत इति मन्तव्यम् । शिरोव्यतिरेकेण राहोरभावेऽपि राहोः शिर इत्यत्र षष्ठ्या स्वस्वामिभावप्रतीतिद्वारा यथा भेदः प्रतीयते घटः कलशः कुम्भ इत्यतो भेदाभावेऽपि शब्दमात्रेण भेदभ्रम इति संतोष्टव्यम् । विद्वच्छब्देनोपक्रमोपसंहारादिभिः षड्विधतात्पर्यलिङ्गैः ।

" उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये " ॥

वेदान्तानां सजातीयविजातीयस्वगतभेदरहितस्वमात्रपरत्वं ज्ञात्वेदृशावलोकमन्तरेण स्वानुभवमात्रनिष्ठा न संभवत्यत एवोच्यते तेषामखण्डार्थ एव संमतो नान्य इत्यर्थः । अथवा संसर्गो वेति श्लोकस्यैवमर्थः— वर्णानां समूहः पदमिति हि पदलक्षणमाकाङ्क्षासंनिधियोग्यतावतां

समूहो वा वाक्यमिति हि वाक्यलक्षणम् । तथा च सत्यभिहितान्वयवादिनां वेदान्तिनां मते देवदत्त गामानय शुक्लदण्डेन पुत्रस्ते जात इति वाक्यात् "तत्त्वमसि" (छा० ६ । ८ । ७ ) "अहं ब्रह्मास्मि" [ बृ० १ । ४ । १० ] "अयमात्मा ब्रह्म" ( बृह० २ । ५ । १० ) इत्यादिमहावाक्येष्वपि स्वस्ववाचकपदैरभिहितार्थानां पदार्थानामन्योन्याकाङ्क्षापूरणयोगत्वेन संसर्गो वाक्यार्थो वर्णनीयः । अतः कथं तादात्म्यमत्र वाक्यार्थ इत्युक्तमित्याशङ्क्य तत्त्वमस्यादिपदानामखण्डैकरसचैतन्यपर्यवसायित्वेन पदार्थभेदाभावात्संसर्गो वाक्यार्थो न संभवति । संसर्गस्य पदार्थद्वयनिष्ठत्वात् । अतोऽन्यत्र वाक्यान्तरे पदार्थबाहुल्यसंभवात्संसर्गः संभवति । अत्र त्वेकार्थपर्यवसानात्तादात्म्यमेव वाक्यार्थः संमतो विदुषां नान्यदित्यर्थाभिप्रायेणोत्तरमाह—संसर्गो वेति श्लोकस्यावतारिकाव्याजेन श्लोकार्थः स्पष्टीकृतः । नच पदार्थानां संसर्गस्य वाक्यार्थत्वात्पदार्थभेदाभावे वाक्यार्थो न स्यादिति शङ्कनीयम् । किंचिज्ज्ञत्वसर्वज्ञत्वादिलक्षणवाक्यार्थापेक्षया कल्पितभेदोपपत्तेः । तस्माद्भ्रान्त्या संसर्गे प्रतीयमानेऽपि विरुद्धांशपरित्यागेनोभयानुगतचैतन्यमात्रपर्यवसानात्परमार्थतस्तादात्म्यमेव वाक्यार्थस्तथैव विशिष्टार्थोऽपि न संभवति पदार्थभेदाभावात् । दण्डी देवदत्तः शुक्लः पट इत्यादौ दण्डिदेवदत्तादिपदार्थभेदस्य विद्यमानत्वादन्यतरविशिष्टान्यतरार्थस्वरूपविशिष्टवाक्यार्थः संभवति । अत्र तु न तथेत्याह—विशिष्टो वेति । अतः संसर्गविशिष्टवाक्यार्थयोरन्यतरन्न संभवति । किंतु तादात्म्यमेव वाक्यार्थ इत्यभिप्रायः । "एकमेवाद्वितीयं ब्रह्म" [छा० ६ । २ । १] "मृत्योः स मृत्युमाप्नोति इह नानेव पश्यति" ( बृह० ४ । ४ । १९ ) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" [तैत्ति० २ । ७ । ३ ] "शिवमद्वैतं चतुर्थं मन्यन्ते" [ माण्डू० १ । ७ ] "द्वितीयाद्वै भयं भवति" [ बृ० १ । ४ । २ ] "तत्र को मोहः कः शोकः" [ ईशा० ७ ] "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" [ ब्रह्मबिन्दू० १२ ] "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" [ श्वेता० ६ । ११ ] इत्याद्यनन्तश्रुतयः सत्याखण्डैकरसवाक्यार्थ एवोपपद्येरन् । अत इदमेव विदुषां मतम् ॥ ३८ ॥

इदानीं विद्वत्संमतत्वेनोक्तमेव स्पष्टी करोति—

प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९ ॥

प्रत्यगिति। अन्तःकरणावच्छिन्नत्वेन प्रत्यक्त्वं प्राप्तो यो बोधस्त्वंपदलक्ष्यत्वेनाऽऽभाति स्वयं प्रकाशते सोऽद्वयानन्दलक्षणोऽद्वयानन्दरूपस्तथाऽद्वयानन्दरूपश्च तत्पदलक्ष्यत्वेन स्वयंप्रकाशमानोऽद्वयानन्दरूपः परमात्मा च प्रत्यग्बोधैकलक्षणः । प्रत्यग्बोधेनैकमभिन्नं लक्षणं स्वरूपं यस्य स तथोक्तः। नन्वानन्दबोधयोः कथं तादात्म्यमुपपद्यत इति चेन्न विरोधः। आत्मनो बोधानन्दस्वरूपत्वात्। अस्तु तर्ह्यद्वयानन्दबोधः प्रत्यगानन्दबोध इति किमिति नोच्यत इति। तत्रायमभिप्रायः—बोधनरूप आत्माऽन्तःकरणावच्छिन्न आत्माद्वितीयत्वेन दुःखभयाद्यभावाद्वृत्त्यन्तराभावेन बोधस्फुरणाभावे सत्यानन्दरूपेणावतिष्ठत इत्यत उभयोरेकरूपत्वादुर्यं तैक्ये न कदाचिदनुपपत्तिः(?)। संसर्गविशिष्टपक्षे प्रत्यक्षविरोधाद्वाच्ययोरैक्यमौपचारिकमेव स्यात्तच्च श्रुतिविरुद्धमित्युक्तम् ॥ ३९ ॥

एवं लक्ष्यार्थयोरत्यन्तैक्यज्ञाने सति किं स्यादित्यत आह—

इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४० ॥

इत्थमिति । अन्योन्यतादात्म्यं परस्परतादात्म्यं द्वयोरपि स आत्मा तदात्मा तत्पदार्थस्य चाऽऽत्मा स्वरूपं स एव त्वंपदार्थस्य । एवं त्वंपदार्थस्य य आत्मा स्वरूपं स एव तत्पदार्थस्य तस्य भावस्तादात्म्यं तस्य प्रतिपत्तिर्ज्ञानं तद्यदा भवेत्तदैवाब्रह्मत्वमहं मनुष्य इति सद्वितीयत्वेन कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वं त्वमर्थस्य प्रत्यगात्मनो व्यावर्तेत । हिशब्दो हेत्वर्थे ॥ ४० ॥

ब्रह्म तु स्वस्य स्वयं परोक्षं न भवति किंत्वब्रह्मत्वविशिष्टप्रत्यगात्मन एवेति यतोऽतस्तस्याब्रह्मत्वव्यावृत्तौ ब्रह्म परोक्षमपि व्यावर्तेतेत्याह—

तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥

५

तदर्थस्येति । तत्त्वमर्थयोरेकत्वज्ञानात्तदज्ञानसंभूतपारोक्ष्याब्रह्मत्वयोर्व्यावृत्तिः स्यादित्यर्थः । किं तत इति । ततः परं किंरूपेणावतिष्ठत इति शिष्यप्रश्नः । पारोक्ष्याब्रह्मत्वव्यावृत्त्यनन्तरं पूर्णत्वं प्रत्यक्त्वं चोभयमपि व्यावर्तेत वा नो वेति प्रश्नाभिप्रायः । आचार्यस्तु शिष्याभिप्रायं ज्ञात्वोत्तरं वक्तुमाह—शृण्विति । स्वभावत एव पूर्णस्याऽऽत्मनः स्वाविद्ययैव प्रत्यक्त्वमतः स्वविद्यया प्रत्यक्त्वस्यैव व्यावृत्तिर्न पूर्णत्वस्येत्याह—पूर्णानन्दैकरूपेणेति । पूर्णानन्देनैकमभिन्नं रूपं यस्य स तथोक्तः प्रत्यग्बोध एव प्रत्यग्व्यावृत्तौ पूर्णानन्देनावतिष्ठत इत्यर्थः ॥ ४१ ॥

एवं स्वकीयग्रन्थस्य तत्त्वमर्थयोरेकत्वलक्षणो वाक्यार्थो निर्णीतः । इदानीं तत्त्वमस्यादिवाक्यं कथं प्रवर्तत इत्याशङ्क्यैवमस्मदुक्तप्रकारेण वर्तत इत्याह—

तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने ।
लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥ ४२ ॥

तत्त्वमस्येति । तत्त्वमस्यादिवाक्यमपि तदर्थप्रतिपादने तादात्म्यप्रतिपादनार्थं लक्ष्यौ लक्षणविषयौ द्वौ तत्त्वंपदार्थावद्वयानन्दप्रत्यग्बोधावुपादायैक्ययोगत्वेन स्वीकृत्य प्रवर्तते । उभयोरेकत्वलक्षणवाक्यार्थं प्रतिपादयति लक्ष्यावुपादायेति । अनेन परोक्षत्वप्रत्यक्त्वविशिष्टवाक्यार्थानर्हौ वाच्यार्थौ त्यक्त्वेत्यर्थाल्लभ्यते ॥ ४२ ॥

तत्त्वमस्यादिवाक्यं वाच्यार्थपरित्यागेन प्रवर्तमानं प्रत्यग्बोधो य आभातीत्यादिश्लोकेन स्फुटीकृतमित्याह—

हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने ।
यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥

हित्वेति । वाक्यं तत्त्वमस्यादिवाक्यं शबलौ विशिष्टावत एव वाच्यौ वाग्विषयौ हित्वा परित्यज्य वाक्यार्थबोधने यथा प्रवर्तते तथाऽस्माभिः प्रत्यग्बोध इत्यनेन व्याख्यातमित्यर्थः । शबलौ हित्वेत्यनेन लक्ष्यावुपादायेत्यर्थाल्लभ्यते । वाक्यं यथा प्रवर्तते तथाऽस्माभिर्व्याख्यातमित्यनेन व्याख्यानव्याख्येययोरेकस्वरूपत्वेनान्योन्यविरोधाभावादस्मत्प्रणीतो ग्र-

न्थो विद्वद्भिर्नोपेक्षणीय इत्यर्थादुक्तं भवति । आदरादेव व्याकृत एतच्छ्रोतॄणां मुमुक्षूणां निःसंशयस्वरूपसाक्षात्कारो भविष्यतीति तात्पर्यं नतु विजिगीषुत्वेन ॥ ४३ ॥

एवं वाच्यार्थं परित्यज्य लक्ष्योपादानेन वाक्यं प्रवर्तत इत्युक्तमिदमनुपपन्नं शब्दस्य वाच्यार्थ एव मुख्यार्थः। वाक्यस्य पदयोर्मुख्यार्थपरिग्रहे विरोधे सति लक्ष्यार्थोपादानं युक्तं तत्र को विरोध इत्याकाङ्क्षायां विरोधं दर्शयित्वा लक्षणावृत्तिं वक्तुं तत्त्वंपदयोर्मुख्यार्थं संक्षेपतो दर्शयति—

आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।
अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४ ॥

आलम्बनतयेति । योऽन्तःकरणसंभिन्नो बोधोऽस्मत्प्रत्ययशब्दयोरालम्बनतया भाति स त्वंपदाभिध इत्यन्वयः । आलम्बनतया विषयतयाऽन्तःकरणसंभिन्नबोधोऽन्तःकरणेनावच्छिन्नबोधस्त्वंपदेनाभिधीयते त्वंपदाभिधः । त्वंपदवाच्यो जीव इत्यर्थः ॥ ४४ ॥

एतेनान्तःकरणावच्छिन्नत्वेन त्वंपदवाच्यत्वेन च प्रयुक्तं सद्वितीयत्वं चोक्तं परोक्षत्वपूर्णत्वप्रदर्शनार्थं तत्पदवाच्यार्थमाह—

मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥

मायोपाधिरिति । मायोपाधिर्यत्नाश्रयाद्दर्पणवत्समष्टयज्ञानाश्रयत्वेन मायोपहिताविद्याकल्पितजीवागोचरत्वेनाऽऽवृताद्रत्यानन्द इति यावत्। अतो जगद्योनिर्जगद्विक्षेपाधिष्ठानं विशेषांशावृतियुक्तस्य रज्ज्वादेः सर्पादिभ्रमाधिष्ठानत्वदर्शनात् । सर्वज्ञत्वादिलक्षण इति । अत एव निमित्तकारणं स एवेतीत्युक्तं "यः सर्वज्ञः सर्ववित्" ( मुण्ड० १ । १ । ९ ) इति श्रुतेः । पारोक्ष्यशबल आवृतत्वाज्जीवापेक्षया परोक्षाविशिष्टः सत्याद्यात्मकोऽपरिच्छिन्नज्ञानानन्दस्वरूप एवमुक्तलक्षणो यः स तत्पदाभिधस्तत्पदवाच्य ईश्वर इत्यर्थः । मायोपहितत्वादस्य परोक्षता सर्वजगदधिष्ठानत्वेन पूर्णता ॥ ४५ ॥

एवं वाच्यार्थावभिधाय तयोरभेदप्रतिपादने विरोधं दर्शयन्लक्षणावृत्तिमाह—

प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।
विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ४६ ॥

प्रत्यगिति । वाच्ययोरेवाभेदे प्रतिपाद्यमान एकस्यैव प्रत्यक्त्वं परोक्षत्वं द्वितीयत्वं पूर्णत्वं च विरुध्यत इति यतोऽतो लक्षणा प्रवर्तत इत्यन्वयः । विरुध्यत इत्यत्र मायोपाधिकत्वकार्योपाधिकत्वकिंचिज्ज्ञत्वसर्वज्ञत्वादिविरोधो द्रष्टव्यः ॥ ४६ ॥

अस्मिन्वाक्य इयं लक्षणा संभवतीति वक्तुं लक्षणासामान्यलक्षणमाह—

मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥

मानान्तरेति । मुख्यार्थस्य वाच्यार्थस्यापरिग्रहे प्रत्यक्षादिप्रमाणविरोधे सति मुख्यार्थेनाविनाभूतेऽर्थान्तरे प्रतीतिर्लक्षणोच्यते । अत्र प्रतीतिर्हेतुभूतशब्दप्रवृत्तिरर्थाल्लभ्यते । सा च त्रिविधा । जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति । तासु गङ्गायां घोषः प्रतिवसतीत्यस्मिन्वाक्ये 'गङ्गायां घोषवासानुपपत्तेर्गङ्गाशब्दस्य मुख्यार्थं प्रवाहं परित्यज्य तद्विनाभूतेऽर्थान्तरे तीरे वर्तमानता जहल्लक्षणा । एवं मनो ब्रह्मेत्यस्मिन्वाक्ये दृश्यत्वेनाचेतनस्य मनसश्चैतन्यैकरसब्रह्मत्वानुपपत्तेर्मनःशब्दस्य मुख्यार्थं धीवृत्तिमात्रं परित्यज्य तत्साक्षिचैतन्येऽर्थान्तरे वर्तमानता जहल्लक्षणा । श्वेतो धावतीत्यत्र श्वेतगुणमात्रस्य धावनानुपपत्तेः श्वेतशब्दमुख्यार्थं श्वेतगुणमपरित्यज्य तदाश्रयभूतेऽर्थान्तरे श्वेतोऽश्वो धावतीति श्वेतशब्दस्य वर्तमानताऽजहल्लक्षणा । एवं "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] इति । "आनन्दो ब्रह्म" [ तै० ३ । ६ । १ ] इत्युक्ते लोके ज्ञानानन्दादीनां धर्मत्वेन प्रसिद्धत्वात्तेषां ब्रह्मत्वानुपपत्तौ सविषयज्ञानादीनां गुणत्वेन ब्रह्मत्वानुपपत्तावपि निर्विषयज्ञानानन्दादेरात्मरूपत्वेन गुणत्वाभावात्सत्यज्ञानानन्दादिशब्दस्य मुख्यार्थमपरित्यज्य तत्स्वरूपत्वेऽपि तदाश्रयवत्प्रतीयमाने ब्रह्मवस्तुनि सत्यज्ञानानन्दस्वरूपं वस्तु ब्रह्मेति । तत्र सत्यज्ञानानन्दादिशब्दस्य वर्तमानताऽजहल्लक्षणा । सोऽयं देवदत्त इत्युक्ते तत्कालतद्देशविशिष्टस्य

देवदत्तस्यैतत्कालैतद्देशविशिष्टस्य देवदत्तस्य चोभयोरेकत्वानुपपत्तौ तद्देशतत्कालैतद्देशतत्कालविशिष्टमेकमंशं त्यक्त्वोभयत्रानुगतदेवदत्तमात्रांशे शब्दस्य वर्तमानता भागलक्षणा सैव जहदजहल्लक्षणोच्यते ॥४७॥

एवं सति तत्त्वमस्यादिवाक्येषु का लक्षणेत्यत आह—

तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥

तत्त्वमस्येति । सोऽयं देवदत्त इत्यस्मिन्वाक्ये सोऽयंशब्दयोर्मुख्यार्थपरिग्रहे तद्देशतत्कालविशिष्टस्यैतद्देशैतत्कालविशिष्टत्वाभावान्मुख्यार्थयोरेकत्वासंभवेऽपि सोऽयंपदे उभयत्र वैशिष्ट्यांशं त्यक्त्वा यथा देवदत्तमात्रे प्रवर्तेते । तथा तत्त्वमस्यादिवाक्येऽपि तत्त्वंपदयोर्मुख्यार्थपरिग्रहे परोक्षस्य प्रत्यक्त्वाभावादपरिच्छिन्नत्वेन पूर्णस्य द्वितीयत्वाभावाच्च वाक्यार्थयोरेकत्वासंभवे सति तत्त्वंपदे उभयत्र परोक्षत्वादिसद्वितीयत्वादिवैशिष्ट्यांशं त्यक्त्वा क्रमात्पूर्णानन्दे प्रत्यग्बोधे च प्रवर्तेते । ननु तथाऽपि पूर्णानन्दप्रत्यग्बोधयोः कथं तादात्म्यमितिचेदसीतिपदेन प्रत्यग्बोधस्यैव ब्रह्मरूपत्वेन पूर्णानन्दैकत्वे कथिते सति वक्ष्यमाणोपायेन पूर्णानन्दत्वे प्राप्ते प्रत्यग्व्यावृत्तिः स्यात् । बोधस्यैवाऽऽनन्दरूपत्वं पूर्वमेवोक्तं प्रत्यग्बोधो य आभातीत्यस्य व्याख्यानावसरे । एवं तत्त्वंपदयोर्भागलक्षणयैव तादात्म्यं स्वीकर्तव्यं न लक्षणान्तरेण तयोरत्रासंभवात् । केचिन्मायामोहितधियः प्रकारान्तरेण वाक्यार्थं कल्पयन्ति । कथमितिचेत्त्वं तदसि तदंशोऽसि तद्विकारोऽसीति वा तत्स्मर्तुमपि न योग्यम् । कथमितिचेत्तत्त्वमसिवाक्ये परस्यांशो जीव इति विकार इति वा नोच्यते "तत्सृष्ट्वा तदेवानुप्राविशत्" [ तैत्ति० २ । ६ । १ ] इत्यादि "अनेन जीवेन" [ छा० ६ । ३ । २ ] इत्यादिश्रुत्या स्वमायासृष्टजगति परमात्मन एव जीवरूपेणावस्थितत्वात् । यथा घटाकाशो महाकाशस्यांशो वा विकारो वा न भवत्येवमात्मनो निरवयवत्वेन निरंशत्वान्नोभयम् "आदित्यो यूपो यजमानः प्रस्तर" इतिवत्प्रशंसापरं न भवति यूपादेरादित्यस्वरूपासंभवात्प्रशंसापरत्वमत्र तु लक्ष्यार्थयोरत्यन्तैक्ये विरोधाभावान्नार्थवादता । अग्निर्माणवक इत्यादिवन्न गौणार्थप्रतिपादकमात्मनो निर्गुणत्वात् । नापि तत्त्वतोऽस्य परमात्मनः कार्यत्व-

प्रतिपादकं वाक्यं मृद्घटः, बीजं वृक्ष इतिवदात्मनोऽनादित्वेन जन्माद्यभावात्तत्कार्यत्वानुपपत्तेः। नापि वाक्यं जातिव्यक्तिप्रतिपादकं दीर्घोऽश्वो ह्रस्वोऽश्वः स्थूलो मनुष्यः कृशो मनुष्य इतिवदात्मन एकत्वेन व्यक्तिभेदाभावात्। नच नीलोत्पलं शुक्लः पट इत्यादिवाक्यवद्गुणगुण्यात्मकत्वप्रतिपादकं निर्गुणत्वादात्मनः। नापि वैशिष्ट्यप्रतिपादकमात्मस्वरूपनिर्विकल्पकज्ञानैकरसत्वाद्वैशिष्ट्यानुपपत्तेः। नाप्युपासनापरं वाक्यं "वाचं धेनुमुपासीत [बृह० ५।८।१]" "आदित्यो ब्रह्मेत्युपासीत" [मैत्र्यु० ६।१५] इत्यादिवाक्यवदत्यन्तैक्यज्ञानार्थमेव तत्त्वमसीति नवकृत्व उपदिष्टत्वात्। एतज्ज्ञानशेषत्वात्सर्वोपासनाया एतत्सर्वं वैशिष्ट्यनिराकरणेनैव निराकृतप्रायं तथाऽपि स्पष्टार्थमनूद्य निरस्तम्। एवमात्मभेदाभावात्तदैक्यमेव वाक्यार्थ इति सिद्धम्। अतः सर्वेषां वेदान्तानां यथासंभवं लक्षणावृत्त्यैव ब्रह्मस्वरूपप्रतिपादकत्वम्। केषांचिद्याावृत्त्या स्वरूपपर्यवसानम्। न गुणवृत्त्याऽऽत्मनो निर्गुणत्वात्। नापि मुख्यवृत्त्या स्वरूपप्रतिपादकत्वम् "यतो वाचो निवर्तन्ते" [तै० २। ४।१] इति वाच्यत्वनिषेधात्। ननु तर्हि "ब्रह्मैक्यविषयां वाचं वदेत्संततमास्तिकः" "अन्या वाचो विमुञ्चथ" [मुण्ड० २।२। ५] इत्यत्र ब्रह्मणो वाग्विषयत्वं कथं श्रूयत इति चेन्न। मुख्यवृत्तिगुणवृत्तिविषयत्वाभावेऽपि लक्षणावृत्तिविषयत्वमात्रपरत्वात्। अतो "मनो ब्रह्म" [छा० ३।१८।१] इत्यादि सदृशानां वाक्यानां जहल्लक्षणया वृत्तिः। सत्यं ज्ञानमनन्तं ब्रह्म [तै० २।१।१ इत्यादि सदृशानां वाक्यानामजहल्लक्षणया वृत्तिः। "तत्त्वमसि" [छा०६।८।७] इत्यादिवाक्यानां जहदजहल्लक्षणा वृत्तिः। "अस्थूलमनण्वह्रस्वम्" [बृह०३।८।८]इत्यादिसदृशानामतन्निरसनद्वारा प्रवृत्तिः। कर्मकाण्डोपासनाकाण्डयोर्ब्रह्मज्ञानार्थमन्तःकरणशुद्धिहेतुभूतशुद्ध्याऽनुष्ठानप्रतिपादकत्वेन ब्रह्मपरत्वं "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" [भ० गी०४।३३] इति स्मृतेः। एवं यथासंभवं योजनीयम्। न यत्र कुत्रापि मुख्यतो गुणतो वा वृत्तिर्ब्रह्मणः सर्वविषयत्वादिति सर्वमवदातं शोधितामित्यर्थः॥ ४८॥

पूर्वं पूर्णानन्दैकरूपेणेत्यनेन जीवस्यैव ब्रह्मरूपत्वं वाक्यार्थं प्रतिपाद्य तं प्रतिपादितमर्थं "तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने" इत्या-

दिभिस्त्रिभिर्ग्रन्थैस्तत्त्वमस्यादिवाक्यस्याप्ययमेवार्थ इति स्पष्टीकृत्य तद्‌परोक्षदार्ढ्याय चोपायमाह—

अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढी भवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९ ॥

अहमिति । अहं ब्रह्मेति स्वस्य ब्रह्मापरोक्षज्ञानं यावद्यस्मिन्काले-निःशेषासंभावनाविपरीतभावनाराहित्यं यथा भवति तथा दृढी भवेत्त-द्दार्ढ्यस्य दुर्लभत्वसूचनार्थं प्रयोगः । तावत्कालपर्यन्तं शमादिसाधनयुक्तः सन् " आवृत्तिरसकृदुपदेशात् " [ब्र०सू०४।१।१] इत्यधिकरणन्यायेन पुनःपुनर्मनननिदिध्यासनाभ्यासं कुर्यादित्यर्थः । ब्रह्मापरोक्षज्ञानदार्ढ्याय शमादिसाधनानुष्ठानेन सहासकृच्छ्रवणाभ्यासस्य विधानादुक्तसाधना-नुष्ठानपुरःसरं द्वित्रिवारं श्रवणादिकरणस्य ब्रह्मापरोक्षज्ञानहेतुत्वमर्था-दुक्तं भवति । एवं द्वित्रिवारं श्रवणादिनाऽपरोक्षज्ञाने समुत्पन्नेऽप्यति-दार्ढ्याभावाद्बहुकालरूषितसंसारवासनालेशेन पुनःपुनश्चित्तविक्षेपसंभ-वादष्टाङ्गयोगसद्वासनाभ्यासाभावाद्बहिर्मनोवासनाया निःशेषनाशा-भावाच्च ज्ञानदार्ढ्याय मनोवासनाया निःशेषनाशाय च बहुकृत्वः श्रवणाद्यभ्यासमष्टाङ्गयोगसद्वासनाभ्यासं च कुर्यादित्युक्तं भवति । एवं कृते विदेहमुक्तता स्यात् । अन्यथा शमादियुक्तस्य द्वित्रिवारं श्रवणा-दिजनितापरोक्षज्ञानमात्रेण जीवन्मुक्तता न स्यात् ।

" इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ "

तदर्थस्य च पारोक्ष्यं यद्येवमित्यत्रापरोक्षज्ञानेनाब्रह्मत्वनिवृत्तेः प्रति-पादितत्वात् । इदमेव शङ्कोत्तरत्वेन समर्थ्यते । ननु ब्रह्मापरोक्षज्ञा-नार्थं शमादिसाधनयुक्तस्य श्रवणादिकरणं युक्तं ततः परं किं प्रयोजन-मितिचेन्न " अहं ब्रह्म " इत्यपरोक्षज्ञाने समुत्पन्नेऽपि संसारवासनाया निःशेषं नाशो न स्यादपरोक्षज्ञानिनोऽपि संसारवासनानिवृत्तेः क्वचि-द्दृष्टत्वात् ।

" संसारवासनादार्ढ्यं बन्ध इत्यभिधीयते ।
वासनातानवं राम मोक्ष इत्यभिधीयते "

इति वाशिष्ठे निर्वासनस्यैव विदेहमुक्त्यभिधानात् । तस्माज्ज्ञानदा-

ढर्याय निर्वासनत्वसिद्धये चासकृच्छ्रवणाभ्यासः कर्तव्यः। ननु एतावता वासनालेशेन ब्रह्मापरोक्षज्ञानिनो जीवन्मुक्तस्य रागद्वेषात्मकः संसारवासनासद्भावो नोपपद्यत इतिचेन्न। अतिदाढर्यहीनस्य कोमलकण्टकस्य दाढर्यात्पूर्वं यथा सम्यक्चोदनकार्यक्षमता नास्ति ब्रह्मापरोक्षज्ञानदाढर्याद्र्वाचीनकाले निरस्ताशेषसंसारनिदानत्वासंभवाज्जीवन्मुक्तस्यापि दशाभेदेन संसारवासनासंभवोपपत्तेः।

" रागद्वेषभयादीनामनुरूपं चरन्नपि।

योऽन्तर्व्योमवदच्छः स्यात्स जीवन्मुक्त उच्यते। वाशिष्ठे जीवन्मुक्तस्य संसारवासनासद्भावदर्शनाच्च। किंच विदेहमुक्तिसमये जीवन्मुक्तस्य वीतिहव्यस्य वचनम्—

" राग नीरागतां गच्छ द्वेष निःशेषतां व्रज।
भवद्भ्यां सुचिरं कालमिह प्रक्रीडितं मया "

इत्यतो ज्ञानदाढर्याय निःशेषसंसारवासनानिवृत्त्यर्थं च वेदान्तमहावाक्यश्रवणमनननिदिध्यासनाभ्यासमष्टाङ्गयोगसद्वासनाभ्यासं च बोधदाढर्यपर्यन्तं पुनः पुनः कुर्यादित्यर्थः॥ ४९॥

इदानीं ब्रह्मापरोक्षज्ञानदाढर्योपायान्तरमाह—

श्रुत्याऽऽचार्यप्रसादेन दृढो बोधो यदा भवेत्।
निरस्ताशेषसंसारनिदानः पुरुषस्तदा॥ ५०॥

श्रुत्येति। श्रुत्या गुरूपदिष्टवाक्यश्रवणादिनाऽऽचार्यप्रसादेन प्रणिपातादिसंपादिताचार्यप्रसादेन च यदा बोधो दृढो भवेत्तत्कालपर्यन्तं गुरूक्तमहावाक्यश्रवणादिकं गुरुप्रसादं च संपादयेदित्यर्थः। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः। [ भ० गी० १३। २५ ] इति स्मृतेर्वेदान्तमहावाक्यश्रवणादिनैव मृत्योरतिक्रमणश्रवणादयमर्थोऽवगम्यते। तर्हि वेदान्तवाक्यश्रवणाद्यभ्यासाद्वा गुरूपदिष्टमहावाक्यश्रवणाभ्यासाद्वाऽपरोक्षज्ञानदाढर्ये सति तदा पुरुषः कथंभूतः स्यादित्याकाङ्क्षायामतिदृढकण्टकन्यायेन दृढापरोक्षज्ञानस्य संसारवासनया सह निःशेषमज्ञानतत्कार्यनिवर्तकसामर्थ्ये सति तदा पुरुषो निरस्ताखिलोपाधिर्भवतीत्याह—निरस्ताशेषेति। कर्मणोऽपि संसारकारणत्वात्। तत्किं निदानशब्देनोच्यते तथाऽसति अज्ञाननिरासमन्तरेण कथं तत्कार्यस्य कर्मणो निरासः स्यादिति निदानशब्देनानादिकारणभवि-

द्योच्यते । तस्याः संसारनिदानत्वं संसारादिकारणत्वं संसारकारणकर्मणः कारणत्वमात्रमिति वाच्यम् । संसारस्य निदानं संसारनिदानमशेषं च तत्संसारनिदानं चाशेषसंसारनिदानं निरस्तमशेषसंसारनिदानं सपरिकरमज्ञानं येन स तथोक्तः ॥ ५० ॥

इदानीं निरस्ताशेषसंसारनिदानत्वे सति किं स्यादित्याकाङ्क्षायां तस्य विदेहमुक्तिरित्युच्यते—

विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः ।
विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ५१ ॥

विशीर्णेति । विशीर्णकार्यकरणः कार्यं शरीरं करणानीन्द्रियाणि विशीर्णानि शिथिलीभूतानि कार्यकरणानि यस्य स तथोक्तः । ननु देहेन्द्रियादौ विद्यमाने तस्य विशीर्णत्वं कथमितिचेत्तस्यापरिच्छिन्नब्रह्माकारभावनया देहेन्द्रियादिपरिच्छिन्नत्वाभावान्मुक्तदृष्ट्या विशीर्णत्वमत एव भूतसूक्ष्मैरनावृतः शब्दादिभिरनावृत इन्द्रियाविशीर्णत्वाद्विषयसंनिधावप्यविकृतचित्त इत्यर्थः । अत एव विमुक्तकर्मनिगड इति विशेषणम् । संचितप्रारब्धागामिरूपं निगडं यस्य स तथोक्तः । अतः सद्य एव विमुच्यते तदैव निरस्ताशेषसंसारनिदानत्वसमय एव विदेहमुक्तो भवतीत्यर्थः । कथं देहे स्थिते विदेहमुक्तिः स्यादिति न शङ्कनीयं लोकदृष्ट्या देहे सत्यपि निरस्ताशेषाज्ञानस्याज्ञानपरिकल्पितदेहाभावाद्विमुक्तिरेव भवति । अत्र श्रुतिः—" अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः " [ छा० ८ । १२ । १ ] इति । नन्वेवं सति प्रवर्तकाभावाच्छरीरं कथं प्रवर्तत इति चेद्यत्र क्वापि चिन्तायुक्तस्य हस्तादिकं स्वतो यथा स्वकार्ये प्रवर्तते तथा वासनाधीनं चक्षुरादीन्द्रियं स्वतः प्रवर्तत एवं पथिगततृणादौ चक्षुरादिर्न रागतः पतति । मुक्तदेहश्चापि पूर्ववद्भोजनादौ प्रवर्तते । यथाऽध्वगेन पथा प्राप्तगिरिनदीविपिनादिकं विलोक्यते तद्वन्मुक्तदेहेनापि भोजनादिकमनुभूयतेऽतः पूर्वसंस्कारवशात्कुलालचक्रन्यायेन ऋषभजडभरतादिदेहवत्पुरावत्प्रवर्तत एवेति वेदितव्यम् । तस्य लोकदृष्ट्यैव शरीरपतनं तत्समये । श्रुतिः— " तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव " [ बृ० ४ । ४ । ७ ]

इति । एवं ब्रह्मापरोक्षज्ञानदार्ढ्यान्निरस्ताशेषाज्ञानस्य पुरुषस्य वासनालेशेन सहाज्ञानतत्कार्यसर्वकर्मक्षये विदेहमुक्तिरुक्ता । एवंभूतस्यापि लोकदृष्ट्या देहावस्थानमात्रेण जीवन्मुक्तत्वाङ्गीकारे ब्रह्मादीनामप्यन्यदृष्ट्या देहसंभवाज्जीवन्मुक्तत्वमेव स्यात् । तच्चानिष्टं तेषामप्यपरिच्छिन्नब्रह्मस्वरूपत्वेन प्रसिद्धत्वात् ॥ ५१ ॥

एवं विदेहमुक्तिनिष्ठामुक्त्वेदानीं ब्रह्मापरोक्षज्ञानमात्रात्पुरुषस्य निरस्ताशेषाज्ञानत्वासंभवात्संचितकर्मण एव क्षये जीवन्मुक्तिमाह—

प्रारब्धकर्मवेगेण जीवन्मुक्तो यदा भवेत् ।
कंचित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२ ॥

प्रारब्धेति । पुरुषो यदाऽनारब्धकर्मबन्धस्य संक्षये जीवन्मुक्तो भवेत्तदाप्रभृति प्रारब्धकर्मवेगेण सह प्रारब्धकर्मफलहेतुभोगहेतुभूतरागादिसंसारवासनालेशेन सह कंचित्कालमवतिष्ठत इत्यन्वयः । एतदुक्तं भवति ब्रह्मापरोक्षज्ञानादनारब्धकर्मबन्धस्य संचितकर्मणः क्षये सति जीवन्मुक्तस्य पुनः शमादिसाधनानुष्ठानेन सह वेदान्तश्रवणमननिदिध्यासनाभ्यासस्य पौनःपुन्येन कृतत्वाद्बोधदार्ढ्ये सति निरस्ताशेषाज्ञानत्वात्प्रारब्धकर्मवासनालेशानुवृत्तेरपि क्षये देहाद्यभिमानाभावात्स तु विदेहमुक्तो भवति । यस्य त्वज्ञानमात्रमेव स्यात्तस्यापरोक्षज्ञानमात्रादनारब्धस्य संक्षये सति बोधदार्ढ्यहेतुभूतश्रवणाद्यभ्यासाकरणाद्बोधदार्ढ्याभावे प्रारब्धकर्मवासनालेशानुवृत्त्या सह कंचित्कालं स तु जीवन्मुक्तरूपेणावतिष्ठते । तस्यापि कालान्तरे शमाद्यनुष्ठानेन सह श्रवणाद्यभ्यासकारणज्ञानदार्ढ्यं संभवति चेत्प्रारब्धकर्मवासनानिवृत्तिद्वारा देहाद्यभिमानाभावाद्विदेहमुक्तिः संभवति । यदि ज्ञानदार्ढ्यं न स्यात्तर्हि प्रारब्धकर्मवासनाभ्यासनिवृत्त्यभावाद्देहपातपर्यन्तं जीवन्मुक्तरूपेणावतिष्ठते प्रारब्धं नामेदानीं प्रतीयमानदेहोत्पत्तिनाशादिहेतुभूतं कर्म । अनारब्धं नाम विष्वग्देहान्तरोत्पादकं संचितं कर्म । ज्ञानोत्पत्त्यनन्तरं देहावसानसमये कर्तृत्वभोक्तृत्वाद्यभिमानमन्तरेण क्रियमाणमागामि कर्म । तत्र प्रारब्धं त्रिविधम् । ऐच्छिकमनैच्छिकं परैच्छिकं चेति । तत्रानैच्छिकपरैच्छिकयोः स्वकीयप्रयत्नो नास्ति । ऐच्छिके स्वप्रयत्नं कृत्वा स्वाभी-

ष्टाननुभुङ्क्ते । किं चाऽऽकाशगमनादिसिद्धिजालानि वाञ्छन्ति चेत्तान्यपि क्रमात्साधयन्ति । तदुक्तम्—

यस्तु वा बालिशोऽल्पोऽपि सिद्धिजालानि वाञ्छति ।
स तु तत्साधनैर्द्रव्यैस्तानि साधयति क्रमात् ॥

इति वाशिष्ठवचनम् ॥ ५२ ॥

इदानीं संसारवासनानुवृत्तिवशात्कर्तृत्वभोक्तृत्वाभिमानमन्तरेण प्रारब्धकर्मफलभोगानुभवसमये हि क्रियमाणानामागामिकर्मणां बन्धहेतुत्वशङ्काभवता( पसा )रयन्प्रारब्धकर्मान्ते विदेहमुक्तिमाह—

निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं तत्कैवल्यं प्रतिपद्यते ॥ ५३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यशंकराचार्यकृता वाक्यवृत्तिः समाप्ता ।

निरस्तेति । वैष्णवं परमं पदं प्रतिपद्यत इत्यन्वयः । विष्लृ व्याप्ताविव्यस्माद्धातोर्विष्णुशब्द उत्पन्नो विष्णोस्तदिदं वैष्णवम् । अतः सर्वदेशकालवस्तुव्यापकत्वादेव परममुत्कृष्टं पद्यत इति पदं स्वरूपमित्यर्थः । वैष्णवमित्यनेनाङ्गाङ्गिभावो नाङ्गीकृतः शिलायाः पुत्रिका राहोः शिर इतिवत् । विष्णोरेव वैष्णवं पदं सर्वव्याप्तं पदं स्वरूपं प्रतिपद्यते प्राप्त इव भवति । कण्ठाभरणस्येव नित्यं प्राप्तस्य स्वरूपस्याविद्ययाऽप्राप्तिरिव विद्यया प्राप्तिरिवेत्यर्थः । तत्प्राप्तौ परमपुरुषार्थं ज्ञापयंस्तत्स्वरूपमेवाऽऽह—निरस्तातिशयानन्द इति । एतत्पदं पूर्वं व्याख्यातमपरिमितानन्दमित्यर्थः । लोके संयोगानां वियोगानां(?) तत्त्वदर्शनात्तत्प्राप्तौ कालान्तरे तद्वियोगेन पुनरावृत्तिशङ्कायाम् । " अनावृत्तिः शब्दादनावृत्तिः शब्दात् " [ ब्रह्मसू० ४ । ४ । २२ ] इत्यधिकरणन्यायेन पुनर्जीवत्वप्राप्तिं वारयति—पुनरावृत्तिरहितमिति । अन्यस्यान्यप्राप्तावेव वियोगः । अत्र तु " तत्सृष्ट्वा तदेवानुप्राविशत् " [ तै० २ । ६ । १ ] इति ।

" अहमात्मा गुडाकेश सर्वभूताशयस्थितः [भ० गी० १० । २०]
परमात्माऽद्वयानन्दः पूर्णः पूर्वं स्वमायया ।
स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥

तत्त्वमसि [ छा० ६ । ८ । ७ ] इत्यादिवचनाज्जीवपरयोर्वस्तुतो भेदाभावाद्वियोगो नास्तीत्यर्थः। तथा चोक्तम् " यद्गत्वा न निवर्तन्ते तद्धाम परमं मम " [ भ०गी० १५ । ६ ] इति । ननु तर्ह्याकाशवत्सर्वगतेन परमेश्वरेण तद्भिन्नस्य जीवस्य तत्प्राप्तिरयुक्तेत्याशङ्क्य साक्षात्प्राप्त्यभावेऽप्युपाधिनिवृत्त्या तद्भावापत्तिरेव तत्प्राप्तिरित्याह—कैवल्यमिति । उपाधिविनिर्मुक्तौ स्वयमखण्डः सच्चिदानन्दरूपेणावतिष्ठत इत्यर्थः । अयमाशयः- अपरोक्षज्ञानेनाज्ञाननिवृत्तिद्वारा संचितकर्मनाशे सति रागादिसंसारवासनालेशानुवृत्त्या कर्तृत्वाद्यभिमानमन्तरेण प्रारब्धकर्मफलानुभवसमय आभासरूपेण क्रियमाणेनाऽऽगामिकर्मणा सह जीवन्मुक्तस्य " तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । [ ब्रह्मसू० ४ । १ । १३ ] इत्यधिकरणन्यायेन कर्तृत्वाद्यभिमानाभावाद्वस्तुगत्या कर्तृत्वाद्यभावाच्च । " यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते " [ छा० ४ । १४ । ३ ] इत्यादिश्रुत्या च संश्लेषो न स्यात् । प्रारब्धकर्मवेगस्यापि मुक्तेषोरिव वेगक्षयान्निवृत्तिरतः संचितकर्मणो ज्ञानेन नष्टत्वादागामिकर्मणा संबन्धाभावात्प्रारब्धकर्मणो भोगेन नष्टत्वात्कारणाभावात्कार्याभाव इति न्यायेन देहान्तरप्राप्त्यभावात्प्रारब्धकर्मभोगान्ते " न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते " [ नृसिं० उ० ख० ५ ] इत्यादिश्रुत्या तप्ता यस्थजलवन्मुक्तदेहे प्राणानां विलयः स्यात् । अत्र प्राणशब्देन ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणादिपञ्चकं मनआद्यन्तःकरणचतुष्टयं लिङ्गशरीरात्मकं सर्वं गृह्यते । प्राणादेरुत्क्रमणाभावाद्देहान्तरसंभवोऽपि न स्यात् । अत्र देहे प्राणोऽस्य लीनः स्यात् । जीवस्य शरीरत्वमपि न स्यात् । यदा मुक्तस्य शरीरं मृतं सत्सद्यः पतति तदोपाधिविनिर्मुक्तघटाकाशमहाकाशवत्परिपूर्णचिदानन्दस्वरूपो भवतीति । अत्र श्रुतिः— " तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये " इति [ छा० ६ । १४ । २ ] " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " [ मु० २ । २८ । ] " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा " [ गी० ४ । ३७ ] " ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति " [ गी० ४ । ३९ ] " तत्र को मोहः कः शोक एकत्वमनुपश्यतः । " [ ईशा० ७ ]

" तरति शोकमात्मवित् । " [ छा० ७ । १ । ३ ] " ब्रह्म वेद ब्रह्मैव भवति " [ मु० ३—२—९ ] " ब्रह्मविदाप्नोति परम् " [ तै० त्ति० २ । १ । ५ ] इत्यादिश्रुतिस्मृतीतिहासपुराणेभ्योऽयमर्थोऽध्यवसीयते ॥ ५३ ॥

नमो ब्रह्मविद्भ्यो नमो ब्रह्मविद्भ्यः ।

इति श्रीविश्वेश्वरपण्डितविरचिता वाक्यवृत्तिः समाप्ता ।